KASHMIR SERIES OF TEXTS AND STUDIES.

No. XXI.

# THE MAHĀNAYA-PRAKĀSHA

OF

## RĀJĀNAKA SHITI KAṆṬHA.

EDITED WITH NOTES

BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT MUKUNDA RĀMA SHÂSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
**SIR PRATĀP SINGH SĀHIB BAHĀDUR,**
G. C. S. I., G. C. I. E.,
**MAHĀRĀJA** OF JAMMU AND KASHMIR STATE.




BOMBAY:
PRINTED AT THE "TATVA-VIVECHAKA" PRESS.
1918.

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २१



# श्रीमहानयप्रकाशः

श्रीमन्महामाहेश्वराचार्यवर्य-श्रीशितिकण्ठाचार्यविरचितः



श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज-

श्रीप्रतापसिंहवर-प्रतिष्ठापिते

**प्रत्नविद्याप्रकाश-(रिसर्च) कार्यालये**

**तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा**

उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन

संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं

पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य

**मुम्बय्यां**

तत्त्वविवेचकाख्य-मुद्रणालये मुद्रापयित्वा प्राकाश्यमुपनीतः




संवत् १९७५ खैस्ताब्दः १९१८

काश्मीर-श्रीनगर

श्रीमन्महाप्रकाशवपुषे शिवाय नमः ।

अथ

# महानयप्रकाशः ।

श्रीमन्महामाहेश्वराचार्यराजानकशितिकण्ठाचार्यविरचितः
प्रोक्ताचार्येणैव विवृतश्च

दिव्या विस्रम्भभूः शान्ता
दशाखण्डावभासभूः ।
सा शिवब्रह्मशब्दोद्य-
श्चिदोघा भासतां सताम् ॥ १ ॥
चतुरण्ड्याः षडध्वीं या
जाठरीकृत्य मूर्छति ।
तुल्यप्रपञ्चनिर्वाणा
साव्यात्कुलकृशोदरी ॥ २ ॥
रौद्री शक्तिर्जीयाद्-
विबद्धभावा घनं विराड्डर्गम् ।

पं० २ ख० पु० भासते इति पाठः ।

रुचितैर्विविधोपायै-
 र्महेशहृदये नियोजयितुम् ॥ ३ ॥

पीठेऽस्मिन्नुड्डियाने परमपरमलं ज्ञानमस्त्युग्रचर्या
 प्राक्प्रत्यक्पीठयुग्मेऽप्यकुलकुलमहोनामके शाक्तमिश्रम् ।
नानैवं पीठतेजो व्यतिषजति मिथोऽयं तु नित्यं महार्थः
 स्फुर्जद्धामेति पीठप्रसृमरमहसा साधिराज्येन जीयात् ॥४॥

संख्यातवर्णपदक-
 मन्त्राध्वानमवस्यता ।
मया तद्वाच्यसर्वस्वं
 वक्ष्यतेऽत्र विचिन्त्यताम् ॥ ५ ॥

---

पं० ३ ख० पु० अस्त्यप्रचर्या इति पाठः ।

पं० ६ ख० पु० महसामाधिराज्येनेति पाठः ।

पं० ७ 'संख्यात' इति पद्यं ख० पुस्तकात्पूरितम् ।

# अथ ग्रन्थारम्भः।

योऽलक्षि दिव्यौघमहाप्रवाहाच्-
शब्दार्थविस्फूर्जथुरादिदेव्याः।
मायीयकल्लोलकलानिदानं
स्वरूपविश्रान्तिफलः स नोऽस्तु ॥१॥

आदिदेव्याः सकाशात् प्रसृतात् दिव्यौघ-पूर्वकमहाप्रवाहात् अनन्तरं, यः शब्दार्थविस्फूर्जथुः मायीयकल्लोलकलानिदानं अलक्षि, स स्वरूपविश्रान्तिफलो नोऽस्तु इति पदयोजना। तात्पर्यार्थस्त्वयम् – परमात्मस्वरूपादिदेव्यधिष्ठितपरावागात्मस्वरूपदिव्यौघात् उल्लसितनाद-स्पन्दस्वभावपश्यन्तीरूपमहाप्रवाहात् अविभिन्नवाच्यवाचकात्मनः अनन्तररावी यो मध्यमा-वाक्प्रपञ्चः संकल्प्यमानार्थारूषितः, शब्दार्थ-

रुचितैर्विविधोपायै-
महेशहृदये नियोजयितुम् ॥ ३ ॥

पीठेऽस्मिन्नुड्डियाने परमपरमलं ज्ञानमस्त्युग्रचर्या
प्राक्प्रत्यक्पीठयुग्मेऽप्यकुलकुलमहोनामके शाक्तमिश्रम् ।
नानैवं पीठतेजो व्यतिषजति मिथोऽयं तु नित्यं महार्थः
स्फुर्जद्धामेति पीठप्रसृमरमहसा साधिराज्येन जीयात् ॥४॥

संख्यातवर्णपदक-
मन्त्राध्वानमवस्यता ।
मया तद्वाच्यसर्वस्वं
वक्ष्यतेऽत्र विचिन्त्यताम् ॥ ५ ॥

---

पं० ३ ख० पु० अस्त्यप्रचर्या इति पाठः ।
पं० ६ ख० पु० महसामाधिराज्येनेति पाठः ।
पं० ७ 'संख्यात' इति पदं ख० पुस्तकात्पूरितम् ।

# अथ ग्रन्थारम्भः ।

योऽलक्षि दिव्यौघमहाप्रवाहाच्-
शब्दार्थविस्फूर्जथुरादिदेव्याः ।
मायीयकल्लोलकलानिदानं
स्वरूपविश्रान्तिफलः स नोऽस्तु ॥ १ ॥

आदिदेव्याः सकाशात् प्रसृतात् दिव्यौघपूर्वकमहाप्रवाहात् अनन्तरं, यः शब्दार्थविस्फूर्जथुः मायीयकल्लोलकलानिदानं अलक्षि, स स्वरूपविश्रान्तिफलो नोऽस्तु इति पदयोजना। तात्पर्यार्थस्त्वयम् – परमात्मस्वरूपादिदेव्यधिष्ठितपरावागात्मस्वरूपदिव्यौघात् उल्लसितनादस्पन्दस्वभावपश्यन्तीरूपमहाप्रवाहात् अविभिन्नवाच्यवाचकात्मनः अनन्तररावी यो मध्यमावाक्प्रपञ्चः संकल्प्यमानार्थारूषितः, शब्दार्थ-

विस्फूर्जथुः—शब्दश्च अर्थश्च नामरूपे वाच्य-वाचकौ तयोर्विस्फूर्जथुः विस्फूर्जितम्, स एव वैखरीस्वभावतद्वाच्यार्थसंवलितः मायीयकल्लोलकलारूपः विश्वप्रपञ्चापरपर्यायः, तस्य निदानम् उत्पत्तिस्थानम्, अलक्षि लक्षितः, स वैखरीपर्यन्तवाक्समुल्लासः निजनिजवाच्यसमुल्लसितः परावागधिष्ठितः—इति वाक्चतुष्टयोल्लसितः वैखरीपर्यन्तः परावागधिष्ठितः चेतनायमानः चित्स्वरूपः, तथा तद्वाक्त्रयीविषयः संकल्प्यमानो वाच्यराशिर्भावाभावस्वभावः उभयथा अयं चित्प्रपञ्चित एव चिन्निदानं चित्प्रतिष्ठितः चिन्मयः चिन्मात्रविश्रान्तो विश्वप्रपञ्चः स्वरूपविश्रान्तिफल एव नोऽस्माकं अस्तु—इति सर्वस्य सर्वदा सर्वगत एवंरूपमहार्थानुभवपर्यवसायी भवतु, इति प्रणामश्लोकेन सूचितम्॥१॥

---

पं० ७ क० पु० वाक्चतुष्टयवैखरीति पाठः ।

एवं परदेवतास्वरूपं परामृश्य गुरुरूपां मकारदेवीं प्रणन्तुमाह

परापरं दर्शयन्ती
शून्याशून्यं निजं वपुः ।
जीयाच्छ्रीमङ्गलोत्कीर्ण-
चित्रपत्रलतायितम् ॥ २ ॥

परापरं शुद्धं प्रपञ्चरूपं च वपुः स्वस्वरूपं, शून्याशून्यं – शून्यं शुद्धचिद्रूपं न तु अभावस्वभावम् अशून्यं मायाकलुषितं च, उभयथा देव्याः स्वस्वरूपमेव चित्रं नानारूपं उत्कीर्णपत्राकारं आविर्भावयन्ती श्रीमकारदेवी आदिगुरुरूपा जीयात् – इति दैव्या ऋचा भगवत्याः स्तुतिर्विहिता, यद्यपि विश्वप्रपञ्चः समस्तोऽपि चिद्विवर्तः तथापि सुप्रबुद्धश्रीमङ्गलारूपेण आदिदेवतैव विवृता – इति स्तुतिरासूत्रिता ॥ २ ॥

अथोचितरुचितां नुतिं सर्वगोचरया देशभाषया विरचयितुमाह

देवत अक्क किशी परु राजि
जग घस्मरु भैरु भक्षेत ।
नन्त शत्त गासक नेराजि
शमवाञी आशयतक्षेत ॥ ३ ॥

'कृशा यानपरा देवी................ ।'

इत्यागमगत्या एकैव परं सर्वात्मना कृशा देवी राजते – अपाकृतद्वैताख्यप्रतिपक्षा द्योतते, किं कृत्वा? इत्याह 'जग घस्मरु' जगद्घस्मरं

'कालः सृजति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥'

इत्युक्त्या जगतोऽदनशीलं भैरवं भक्षयित्वा

'भैरवरूपी कालः सृजति जगत्कारणादि कीटान्तम् ।
इच्छावशेन यस्या.............................. ॥'

पं० ६ क० पु० आशय भक्षेत इति पाठः ।
पं० १४ क० पु० भैरवादि कीटान्तम् इति पाठः ।

इत्युक्तेः, कालो भैरवः, स च नादस्वभावः प्राणरूपः, यदुक्तम्

'स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥'

इति, भैरवायमाणं तं प्राणं भक्षयित्वा विलाप्य अप्राणभूमिं नादनिधनमासाद्य इति यावत्, किं भूता? इत्याह 'नन्तेति' नवकल्लोलस्यानन्त्यात् कल्लोलरूपा अनन्ताः शक्तयस्तासां ग्रसितुं प्रवृत्ता, यदागमः

'रोमकूपोदिता देव्यो जगद्ग्रासाज्ज्वलद्रुचः ।
वान्त्वा विश्वं ग्रस्तविश्वास्ताः काल्याः कवलः सकृत्॥'

इति, अन्तर्देहे बहिश्च निरीहत्वात् उपशान्तेच्छाशक्तिप्रसरा अनुपाधिरविभागवती । तथा 'नेराजि' इति, नीराजिके विमले द्वैतकालुष्येण असंकीर्णे स्वस्वरूपे, अथ वा देव्या निजे साम्राज्यमहोत्सवे अखण्डावभासात्मनि दिग्विजयाय समयविशेषे उत्कृष्टभूमिकायाम्, अथापि

पं० ५ क० पु० निदानमासाद्य इति पाठः ।
पं० ११ क० पु० उपशान्ते इच्छाशक्तिप्रसरे इति पाठः ।

नीराज्ये नष्टराज्ये कल्पनाग्लपनात्सर्वव्यवस्था-मुषि निरर्गले समये। 'शमवाञी' शाम्यन्ती कल्लोलं जहती स्वरूपस्था इति यावत्। आश्र-यस्य आधारस्य तनूकरणान्निस्तरङ्गं स्वभावं प्रस्तुवाना शान्तेन रूपेण राजते इति त्रिधार्थः। अथ आशयं चित्तं तक्षणेन विमलीकरणेन श-मयन्ती उपशान्तेच्छाप्रसरं स्वं निरीहं कुर्वाणा राजते ॥ ३ ॥

एवमुचितं रुचितं शान्तं देव्या रूपं स्तुत्वा उदितमाह

अकुल छुत्त व्यापक बोधारन
कुलगत अहली शत्त गुमून ।
गन्थि चक्क आधार विधारन
सा नेकरूप अक्कै विजयून ॥४॥

अकुलं कुलोत्तीर्णं रूपं स्पृशन्ती, व्यापिका, बोधारणिः बोधस्य उत्पत्तिस्थानम्, ततः कुल-

पं० ७ क० पु० उपशान्ते इच्छाप्रसरे इति पाठः।

गता च, अहलारूपा शक्तिः—अवर्जितो हल् अहल् मध्यपदलोपी समासः तेनाकारेण स्पष्टरेखाकृतिना रहिता हल्रूपा हकाराकृतिः शक्तिरहला। अथ वा अकारहकारौ आद्यन्तवर्णौ लाति गृह्णाति व्याप्नोति मातृकोच्चाररूपा। अथ वा न विद्यते हल् यस्याः सा अहल् स्वररूपा कुण्डलिनी लिपिमप्राप्ता उच्चार्यमाणा ग्रन्थिचक्राधाराणां विदारणी गुमगुमायमाना सती गुञ्जाना इव ध्वनतु उच्चरतु, अहलास्थानादुदानशक्तिरूपा शक्तिरुद्यदवस्थायां ग्रन्थीनां चक्राणाम् आधाराणां च विदारणी ऊर्ध्वगमनाय विवराधायिका ध्वनिव्यक्त्या स्फुरतु, एवंविधापि अनेकरूपा विजयताम्, तथा च आमावास्यात्रिंशिकायाम्

'योऽसौ परापरः शान्तः शिवः सर्वगतो महान्।
अप्रमेयो ह्यनन्तश्च व्यापी सर्वेश्वरेश्वरः॥
तस्यास्ति सहजा शक्तिः सर्वशक्तिमयी परा।
इच्छाज्ञानक्रियात्वेन सैवैका बहुधा स्थिता॥

पं० ५ क० पु० मातृकासंचाररूपा इति पाठः।

तस्या उदितरूपाया ये भेदाः कार्यतो गताः ।
तानन्तस्तु समाहृत्य सामरस्ये शिवे स्थिता ॥ '

इति । एवं दर्शनार्थस्य शक्तित्वात्

' स्थूला विश्वतनुर्देवी सूक्ष्मा चिन्मात्ररूपिणी ।
परा नित्योदिता शान्ता ब्रह्मसत्तास्वरूपिणी ॥ '

इत्यागमोक्तिवत् आदौ पर्यन्तदेवीम्, ' अकुल-छुत्त व्यापक बोधारण ' इति परां, ततः ' कुल-गतअहलीशत्तगुमून, गन्थिचक्कआधारविधारन ' इति सूक्ष्मरूपां परापरां, तथा ' अनेकरूप ' इति स्थूलरूपां च अपराम् – इति त्रिधा नुता, सा च त्रिविधापि एकैव इत्यात्मैकात्म्येन स्व-स्वरूपतया विजयताम्, अकुलभूमिं व्याप्नुवा-ना तथा बोधानां नियतावभासानामरणिर्ज-ननी, तथा अनेकरूपा सा एकैव विजयताम्, प्रतिपक्षप्रतिक्षेपादनर्गलमखण्डावभासस्वभावा एकच्छत्रेण साम्राज्येन विजृम्भताम् – इति इह प्रकरणे प्रधानभूता प्रथमतः शक्तिरेव प्रणन्त-व्या, प्रणामे च स्तोतुर्न्यग्भावः स्तुत्यस्य च

उत्कर्षः, यथा स्वल्पविषयो हि महाविषयस्या न्तर्भूतो भवति इति विजयोक्त्या प्रणामार्थ एव प्रतिपन्नो भवति, अतस्तथा निर्देशः कृतः ॥४॥

एवं त्रिविधां संस्तूय मूलभूतं शाम्भवं रूपं परामष्टुमाह

पर्यन्तान परि पर्यन्ति
वन्नविभागस हेतु अहेतु ।
खचरीचक्क फुरि यस ह्नन्ति
सो अक्क महाथु जयि अनिकेतु ॥५॥

स एको महार्थो विजयते इति वाक्यार्थः । अहन्तया वृत्तिचक्रप्रसरणपर्यन्तं पादप्रसारिका यस्यात्मनः स एको न्यस्तमहार्थभावः उद्दलितद्वैतविस्फारशक्तिगर्भत्वात् एक एव उक्तगत्या, तथा वक्ष्यमाणचतुष्षष्टितमप्रान्तभूमिकावसानभूतपञ्चषष्टितमस्थानावतंसभूतः सर्गप्रलयभूमौ विजयताम् । वाक्यार्थसमाप्तौ च संग्रहेण तद्विशेषणम्– 'अनिकेतु' इति दिग्देशकाल-

जातिव्यक्तीनां नैयत्येन व्यवच्छेदकरीणां सर्वासामपि एकेन निजस्वरूपेण व्यापकत्वात्सर्वत ऐक्येन कृतपादप्रसारिकाया अनिकेतः, यत्प्रत्यभिज्ञाकृत् राजानकः स्तुतवान्

'यत्किंचिदेव भूतानां भवदावरणं प्रति ।
न किंचिदेव भक्तानां भवदावरणं प्रति ॥'

इति । कश्चिच्च विपश्चिदाह

'यद्यदावृतिकरं प्रकल्प्यते
तेन तेन वत जाज्वलीति यत् ।
भैरवीयमिदमस्तु वस्तुतः
प्रस्तुताद्वयनयप्रथं वपुः ॥'

इति । स इति तच्छब्देन त्रीणि वाक्यान्तराण्याक्षिपति, पर्यन्तानां यः परो द्वितीयभूमिकाधिशायी तस्यापि परस्य यः पर्यन्तः अवधिः प्रतिष्ठास्थानम्, यदाह प्रत्यभिज्ञाकृत्

'सर्वसंविन्नदीभेदाभिन्नविश्रान्तिमूर्तये ।
नमः प्रमातृवपुषे शिवचैतन्यसिन्धवे ॥'

---

पं० १६ मूलपाठः ( भावोपहारस्तोत्रटीकायां ) विश्रमभूमये इति ।

इति । पदार्थानां सदसद्भावे 'इदं नीलम् इदं पीतम्' इति प्रतिकर्मव्यवस्थायां 'इदमित्थम्' इति निश्चयज्ञानं पर्यन्तः, यद्गीतम्

'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'

इति । तथा

'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते'

इति । तथा

'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ।'

इति । एतच्चेन्द्रियप्रतिबद्धं तेषां च नानात्वात् बहुत्वम् विषयकलुषितानां परः प्रतिष्ठास्थानम् शुद्ध आत्मा परावाग्रूपः तेषामपि आत्मनां निष्ठास्थानम् पर्यन्तः – विश्रामस्थानम् परमात्मा महार्थः । तथा चोक्तं संवादे

'योऽसौ परापरः शान्तः शिवः सर्वगतो महान् ।
अप्रमेयो ह्यनन्तश्च सर्वव्यापी महेश्वरः ॥'

---

पं० १३ ख० पु० तथा चोक्तसंवादे इति पाठः ।
पं० १५ क० पु० व्यापीश्वरेश्वर इति पाठः ।

इति स एव महार्थनामा । एष एव द्वैतिनां नरशक्तिशिवतया अथापि आत्मविद्याशिवभाषयोत्तरोत्तरमतिशयितः ज्ञानज्ञातृपरमात्मत्वेन वा यत्र जाग्रत्स्वप्नसुषुप्तैर्ज्ञानभूमिकेति ज्ञानरूपं तदन्ततुर्यभूमिकायां ज्ञातृरूप आत्मा, तदतीतस्तुर्यातीतभूमिकायां परमात्मा अयं महार्थः, तथा पिण्डे भौतिके देहे तिष्ठति 'अहं देही' इति स्थितिमनुबध्नाति इति पिण्डस्थः यतः पिण्डे बद्धाहन्तः प्रथमपुर्यष्टकस्थो देहकञ्चुकी बुद्धिकर्माक्षवृत्तिवलितः कर्मात्मा पिण्डस्थ उच्यते, तस्य नादशक्तिर्निदानभूता, पदस्थेति ऊर्मिरूपा मातृका प्रकृतिः शब्दशक्तिरूपा वाचकप्रपञ्चविस्तरा वर्णपदमन्त्ररूपनामविवर्तः मध्यमपुर्यष्टकरूपः अनन्तर्बहीरूपोऽपि बहिरन्तर्व्यापकप्रमातृरूपः तद्विशेषश्च नादबिन्दुयामलीभावात् अनलपवनवलितः कन्दाध्मातः,

पं० ८ क० पु० स्थितिं बध्नाति इति पाठः ।
पं० १० क० पु० वृत्तिवर्जित इति पाठः ।
पं० १६ ख० पु० पवनवर्जित इति क० पु० कर्माध्मात इति पाठः ।

तैजसत्वात् रूपेन्द्रियगोचरः कलातत्त्वभुवना-ध्वगर्भो बिन्दुतत्त्वभूतः उच्चरितज्वलच्छक्तिवि-स्फारो रूपस्थः तृतीयपुर्यष्टकरूपः, यतः

'भूततन्मात्रमरुतः करणैर्गुणशक्तिभिः ।
युताः पुर्यष्टकं ग्रन्थ्यक्षाङ्गुलाद्या द्विषड्क्षीः ॥'

इति त्रिप्रकारकोऽपि एक एवेह, तदुत्क्रम्य रूपा-तीतः परिपूर्णस्वपरामर्शरूपः तुर्यदशामयः शुद्ध आत्मरूपः तदपि अतिक्रम्य सर्वातीतोऽयं म-हार्थः, तथा पर्यन्तवर्तिनामाम्नायानां यः पर उत्कृष्ट उत्तराम्नायः ततोऽपि षड्त्रिंशद्भेदभिन्नाद्यः पर्यन्तः प्रान्तवर्ती नवचक्रसंप्रदायः सोऽयं म-हार्थः, तथा उभे सुव्यक्ते प्रथमनिर्दिष्टे क्षित्य-म्भसी महाभूतरूपे तृतीयस्मिन् ज्वलनाख्ये भूते प्रलयं गच्छतः, तदपि ज्वलनाख्यं तृतीयं भूतं वाय्वाख्ये चतुर्थे शाम्यति, तच्च चतुर्थं वाय्वाख्यं भूतं स्पन्दरूपं पञ्चमे भूताकाशे निः-स्पन्दे सामरस्यमुपगच्छति, इति – भूताकाशो विश्वस्य महाभूतमयस्य पर्यन्तः, स च भूता-

काशः परे चिदाकाशे प्रतिष्ठामुपैति, इति – पर्यन्तस्य परश्चिदाकाशः, तस्यापि पराकाशः पर्यन्तः, यदागमः

'बाह्याकाशे चिदाकाशे पराकाशे सदोदितः ।
कोऽप्यपूर्वो महासत्त्वो भानुः सर्वत्र राजते ॥'

इति तृतीयभूमिकाधिशायी पराकाशो महार्थोऽस्तु, तथायं वर्णविभागस्य हेतुः 'इदं कृत्वा इदं करोमि' इति स्थूलेच्छापूर्वककर्तृत्वाभावात्कारणं हेतुः, स च परेण केनचिदप्रवृत्तत्वादहेतुः स्वयं प्रभुः वर्णानां नाम विवर्तस्य कारणभूतमातृकागताकारादिहकारान्तानां तथा वर्णानां ब्रह्मक्षत्रविट्शूद्रादीनां यो विभागो विभक्तता – सजातीयविजातीयव्यावृत्ततयाऽन्योन्यभेदवैलक्षण्यं नाम तत्र हेतुर्वैचित्र्यनिर्माता न तु कुम्भकारवत् स्थूलेच्छापूर्वकारी, अत्र च व्याख्यासतत्त्वं मुखान्मुखम् इत्यलम्, तथा खचरीचक्र······· मरीचिचक्रमहन्तया द्वारमुखेन विषयपर्यन्तमहम्भावेन पूर्णेन तावत्पर्यन्तावे-

शेन स्ववैभवेन वितेन यस्य भासते यस्मिन्प्र-
तिष्ठितं सत् ताराचक्रमिव संसृतिचक्रं स्पन्दते
स आत्मा नानाव्यक्तिगतश्च अनेकधा भास-
मानोऽपि वस्तुत एकः, स यदा नानाव्यक्तिग-
तमात्मानं रसेन्द्रविसरमिव अनेकधा गतमेक-
त्वेन प्रत्येति अखण्डावभासेन व्यवहरति च
तदा परमात्मा इति मन्तव्यः, सोऽपि महार्थ-
तया उपास्यः, स षोडश................
तथा च यजुषां ब्राह्मणेऽस्य सप्तदशत्वम्

> 'सप्तदशः सर्वो भवति सप्तदशः
> प्रजापतिः प्रजापतिमेवाप्नोति ।'

इति । सामवेदे ब्राह्मणे चोक्तम्

> 'सर्वः सप्तदशो भवति ।'

इति । स च भूतकर्माक्षबुद्ध्यक्षद्वाराणां पञ्चद-
शानां षोडशस्य परमः पर्यन्तवर्ती सप्तदशो
देही बहिर्मुखः कर्मात्मा, तथा वियद्गुणः
शब्दः, वायुगुणौ शब्दस्पर्शौ, तेजोगुणाः शब्द-

स्पर्शरूपाख्याः, सलिलगुणाः शब्दस्पर्शरूपरसाः, क्षितिगुणाश्च शब्दस्पर्शरूपरसगन्धाः – एवं पञ्चदश, षोडशी बुद्धिः, तैर्गुणैः संनद्धोऽन्तरात्मा सप्तदशः, तथा बुद्धिकर्माक्षद्वाराधिष्ठातृमरीचिदशकं चिदानन्देच्छाज्ञानक्रियाशक्तयः पञ्च ताः पञ्चदश, षोडशी शुद्धप्रबुद्धा शक्तिः, स एव पूर्णाहंकृन्मय आत्मा तदतीतः सप्तदशः परमात्मा – इत्ययं महार्थः, स एव नवात्मेति व्यवहृतः । तथा च श्रुतौ

'सावित्रनाचिकेतचातुर्होत्रिकमन्त्रोपधानक्रमेण अधश्चिति-मध्यमचिति-उत्तमचितिभिश्च तस्य चयनस्य शिरसा अंसद्वयेन पक्षद्वयेन श्रोणिद्वयेन पुच्छेन च – इत्यष्टानां मध्यगो नवम आत्मा उपधातव्यः ॥'

तथा

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयम्................................. ।'

इति गीतार्थवत् ।

'क्ष्मावह्नियजमानार्कजलानिलनिशाकराः।
खं चेति मूर्तयः........................... ॥'

इति प्रकृत्यष्टकमध्यगो नवम आत्मा, देहक-ञ्चुकरूपप्रथमपुर्यष्टकाधिष्ठाता नवम आत्मा स-प्तधा प्रसृतश्च वाहमरीचिपञ्चकसंनद्धस्य षष्ठस्य आत्मनो विश्रान्तिस्थानं सप्तमः परमात्मा, यदागमः

'एवं द्वादशधा व्याप्तिः सप्तधा च व्यवस्थिता।'

इति सप्तनाथपिण्डपरतया, तथा

'द्वादशात्मा द्वादशस्थः................. ।'

इति द्वादशानां मरीचिस्थानानामधिष्ठाता द्वा-दशसु वाहेषु अहन्तया कृतपादप्रसारिकः, स च वस्तुतो द्वादशान्तस्त्रयोदश आत्मा तस्या-प्यन्तः द्वादशान्तान्तः परमात्मा तस्य भासक-स्तदाविष्ट इत्यर्थः। यदा एकः द्वादशान्ता-न्तभासक इति, यद्वार्तिके स्तुतम्

'भात्यक्षैर्विभ्रमास्त्वेलन्नात्मेति न्यक्षवीक्षितः।
परमात्मेति यः स्तौमि तं स्वमम्लानवैभवम्॥'

इति । एवं षडतीतः अष्टोत्तरः द्वादशान्तः त्रयोदशान्तः षोडशान्तः अष्टाष्टकान्तश्चायं महार्थ एव पर्यन्तवर्ती स्तुतः । ननु को नाम महार्थस्य महानर्थोऽभिधेयः? अत्रोच्यते – एकशेषेऽस्मिन्विश्वस्य बीजभूते ये ये केचिदतिशायिनो धर्मास्ते सर्वे तस्यैवैकस्य संभवन्ति, कोऽन्यो निरुपाधेरखण्डावभासस्वभावात् चित्स्वरूपान्महार्थशब्दस्य पात्रम्, तथा चायं पक्षभेदोद्देशः स्वोपशान्तिः स्वस्वरूपसमावेशः कथनार्चने – महार्थशब्दवाच्यानि ।

> 'पञ्च........................................ हे ।
> स्वरूपशान्तिर्व्युत्थाने चिन्मात्रं विश्ववैभवम् ॥
> बाह्यमत्ययमात्रोद्य.............................. ।
> ........ यात्रामपश्चैकमयी देव्या द्विधा तनुः ॥'

व्युत्थानरूपा व्यवह्रियमाणेवानुभूयते, तदेतद्विधापि व्युत्थानरूपं नित्यसमाधानम्, एवं त्रिधावेशः शम्भुशक्त्यण्डभेदेन, प्रथा च आमुखान्मुखं च कथनं द्वयोरावेशपूजयोर्निश्चायकं

वाङ्मयेन रूपेण प्रतिपादितम्

' पूजाक्रमः स्वभावेन कथनावेशरूषितः ।
स्वरूपप्राप्तये हेतुः पारम्पर्योपचारतः ॥ '

तथा

' पारम्पर्यक्रमादिष्टपूजाङ्गेभ्यः पृथक्कृता ।
इतिकर्तव्यताहीना द्रव्यमात्रोपयोगिनी ॥
समाशा वा·····गोष्ठीशामृताशी स्याद्यतो गृही ।
केवला चरुचर्या या सेच्छामात्रप्रपूरणी ॥
षोढा वस्तुस्थितेर्मध्यार्त्कि महार्थाभिधोचितम् । '

किं समुदितानाममीषां षण्णामियं महार्थ इत्येका संज्ञा – षट् समुदिता ' एको महार्थ ' उच्यते, अथ वा प्रत्येकं व्यस्ताः षडेते अयं महार्थोऽयमपि महार्थ इति महार्थशब्देन पृथक् पृथक् अभिधीयन्ते? इति संदेहे समाधीयते – उभयथापि शक्यव्यपदेश्यं महार्थाभिधानम्

' महार्थवाङ्मुख्यगत्या स्वस्वरूपाभिधायिका ।
पारम्पर्येण तत्प्राप्तेरन्यत्रैतन्निबन्धनम् ॥ '

इति । तत्र सुशान्ता तावद्वास्तवी महार्थपदा-

भिधेया, स एव स्वस्वरूपावेशः परः पुरुषार्थः सर्वेषामविवादभूः, तद्विश्रान्तिलाभाय च विश्राकारतया अनुभूयमानं देवीधाम स्वरूपप्राप्तिहेतुभूतं भवतु, आवेशश्च प्राणावेशमय आणवः, द्वितीयश्च प्राणक्षोभवर्जितः सानन्दः शाक्तः, तृतीयश्च आनन्दानुभवोत्तीर्णः स्वस्वरूपविश्रान्तिनेदीयानावेशः शांभवः उक्तस्वरूपलाभपरतया महार्थव्यपदेश्यो भवतु, कथनं च मुखान्मुखं सर्वनिरपेक्षमर्चनावेशनिश्चायकं करस्थाम्रवत् स्फुटमेव स्वस्वरूपप्रदर्शकमुपचारान्महार्थसंज्ञाव्यपदेश्यं भवतु, पूजाक्रमोऽपि स्वभावत एव आवेशकथनार्थोभयेन वस्तुगत्या गर्भितः स्वस्वरूपाभिन्नोऽपि प्रस्ताव्यमानः पारम्पर्येण वास्तवभूमिकाप्राप्तिहेतुः उपचारेण पारम्पर्येण प्रापकतया महार्थसंज्ञया व्यपदिश्यताम्, चर्या नाम जग्धिसपीतिमात्रपरमा इतिकर्तव्यताहीना पञ्चभ्यः पृथग्भूता षष्ठीति कथमुच्यते किमिच्छापूरणाय सुखप्राप्तये वा उत

स्वागमार्थपूरणाय इति त्रयाणां पक्षाणां मध्यात् स्वागमार्थपरिपूरणं नाम अङ्गिभूतं पूजाशून्यं न संभवति – द्रव्याभिलाषेण प्रस्तूयमानचर्या-परिकरे प्रसंगात् लोकानुरोधेन वा क्रमस्मरण-मंशमात्रं प्रवर्त्यमानमौचित्यं न भजते, सुख-प्राप्तिश्च बहुभिरुपायैर्लभ्यमाना पूजाव्यपदेशेन प्रतिष्ठां न भजते, इच्छाप्रतिपूरणं च किं स्वत-न्त्रम् उत समयपरतन्त्रम्, तत्र सुसमयाः पूजा-क्रमाङ्गभावात् न भिन्नाः संभवन्ति, स्वतन्त्रश्चा-नवस्थितः प्रमातॄणामिच्छावेश आनन्त्येन पूर्य-माणे दुष्पूरे एव अकिंचित्करश्चेति, क्वचिच्च इदं परिणामाय द्रव्यस्य, यदाहुरात्रेयादयो महर्षयः

'आनूपं जाङ्गलं मांसं विधिनाप्युपकल्पितम् ।
मद्यं सहायमप्राप्य सम्यक्परिणमेत्कथम् ॥'

इति भुक्तपीतपरिणामकत्वेन उपदिष्टम् । तथा

'न गोष्ठी या सुरारिक्ता न सभा सा सुरोज्झिता ।
न कामकेलिरसुरा नावदंशः सुरोज्झितः ॥'

इति भोगाङ्गत्वेन कल्प्यमानं कथमष्टचक्रेश्वरा-

दिदेवतारूपेण बलिरुपचर्यमाणं प्रधानार्चनोपकरणीभावेन भाव्यमानं सामान्योपकरणे स्थापयिष्यते, उच्छिष्टभोजनमध्ये च प्रवेश्यमानं मदिराभाण्डं महदनौचित्यं पुष्णाति न तु उच्छिष्टं पवित्रीकरोति इति

' मुख्यं पूजोपकरणं भोगसाधनतां नयन् ।
प्राप्नोति किं न समयलोपजं फलमुत्कटम् ॥
मद्यमांसशिखाभोगरामासङ्गपरायणः ।
लोलो लिङ्गपरः क्षुद्रो न महार्थस्य भाजनम् ॥ '

इति केवलचर्याभासपक्षो निरस्तः । एवमखण्डस्य वस्तुनस्तदंशानां च ये उपायाः, तदुपायसिद्धिहेतवो वापि उपायान्तराणि – इति स्वतः पारम्पर्येण वा वाचकतया महार्थसंज्ञायाः पञ्चधैव विषयाः सन्ति इति सिद्धम् । इति प्राकरणिकमेतदुक्तम् । अयं प्रणामविधिः ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
प्रथम उदयः ॥ १ ॥

---

# महानयप्रकाशः ।

अथ द्वितीय उदयः ।

अथ ग्रन्थावतारक्रमः तत्र प्रथमः सर्गा-
वतारक्रमः ॥

परम शिवस परस्यौ तस शच्ची
पथम सपन्दा यो निग्घातु ।
युग्मा उदितु सदाशिवरुच्ची
सो विश्वबीज नादस उग्घातु ॥ १ ॥

एवं तस्य परस्य शिवस्य तस्याः परस्याश्च शक्तेर्यत् युग्मं – सामरस्यभूः सदातनः सहजः स्वभावः, अविनाशि यत् पारमेशं रूपं, तस्याद्यः प्रथमः स्पन्दः – उन्मिषितुम् अङ्कुरीभावः विमलनिर्वातव्योम्न इव आकस्मिको निर्घातः युग्मादुदितः स विश्वबीजस्य सदाशिवात्मनो

पं० ७ ख० तस्माद्दाद्य इति पाठः ।

नादस्य प्रकृतिरुद्घातः — उदयरूपो व्यक्तिस्थानम् । इति परः सर्गः ॥ १ ॥

तस्य च

अग्नीषोममये संधाने
नादस बिन्दु पत्ततुलग्गु ।
ईशरु शब्द अर्थु जन पाने
इह चेतनकत्तिकु इच्छासग्गु ॥ २ ॥

अग्नीषोममयेन अनुसंधानेन मीलनया, नादस्य सदाशिवस्य, बिन्दुः पश्चात्तल्लग्नतया अवश्यभावी, ईश्वरः शब्दस्यार्थ इव नान्तरीयकः प्राणभूतः, तस्मान्नादाधिष्ठितबिन्दुरूपादीश्वरात् एष चेतनकर्तृक इच्छापूर्वको विश्वप्रसरः, तस्य नादस्वरूपस्य प्रकाशैकवपुषः सदाशिवभट्टारकस्य नान्तरीयको विमर्शः ईश्वरो बिन्दुः, स प्रख्याया उपाख्या, चिन्मात्रस्येव आनन्दः, प्राणस्येव अपानः, पुंसो वा प्रधानम्, यथा लोके शब्दानुयायी अर्थः जगन्निर्माणे च

अग्नेः सोमोऽनुषक्तः, तथा च अयं नादस्य विन्दुः युग्मीभावेन जगत्स्पन्दितस्य हेतुः, एवं अग्नीषोमात्मतावलम्बे सति इच्छापूर्वकः चेतनकर्तृकः ऐश्वरः सर्गवन्धः, इह पुनरिच्छैव उपादानम् न तु ब्राह्मसर्गवत् महाभूतनिर्वर्त्यता। किं च नायं सेश्वरचार्वाकप्रक्रियावत् व्योम्नो विश्वप्रादुर्भावो व्योम्न्येव प्रलयः। इत्यैश्वरः सर्गः ॥ २ ॥

तदेव च व्यङ्क्तुमाह

मुखगत्त मा मकुरस सङ्क्रस्यो
गुरव्वम वाचिकु पंचकवोधु ।
परनभ इच्छा चिद कमु चस्यो
इसउ भूतव्योम अपवोधु ॥ ३ ॥

मकुरे आदर्शतले मुखगतं गौरवं, तथा वाङ्मय उच्चारः, तथा पञ्चकात्मा च अक्षपञ्चकजनितो वोधो, विशिष्टं ज्ञानम् – एतत्सर्वं प्रतिबिम्बत्वेन संक्रान्तं न दृश्यते, तथा च अयं भू-

ताकाशश्चिदाकाशस्य प्रतिबिम्बोऽपि प्रबोधर-
हितो जड एव, यतः परनभसि इच्छाचित्क्रमः
प्रलीनः, चिन्नभस्येव इच्छाप्रसरः समस्ति न
जडे भूताकाशे, विमले अनन्ते चिन्नभोवद्व्याप-
केऽपीति, यथोक्तं श्रीविज्ञानभैरवे

'नित्ये निराश्रये शून्ये व्यापके कलनोज्झिते ।
बाह्याकाशे मनः क्षिप्त्वा पराकाशे समाविशेत् ॥'

इति बाह्याकाशसाधर्म्येण पराकाशोपदेशव्य-
वहारः, तथापि न सर्वे दृष्टान्तधर्मा दार्ष्टान्तिके
योजयितुं शक्याः, य एव साधारणधर्मास्त एव
संचारिण इति विवक्षाविशेषनियन्त्रितः दृष्टान्त-
दार्ष्टान्तिको व्यवहारः, यतो – यस्माद्धेतोः भू-
तव्योम इदमप्रबोधि बोधरहितं जडस्वभावं
भवति, इत्थं – यद्वत् मुखं सर्वधर्मैर्विशिष्टं दर्पणे
प्रतिबिम्बति तथापि गौरवं तुलया गुरुत्वं तथा
वाक्प्रपञ्चचातुर्यं बुद्धीन्द्रियवैदुषी च न आदर्शे
प्रतिबिम्बति, तथा परमाकाशधर्माश्चिदाकाश-
धर्माश्च न भूताकाशे संभावनीयाः ॥ ३ ॥

अथ तामीश्वरसर्गप्रक्रियामाह

सो इच्छापसरु अकारु चतुष्कलु
यस रौद्र वाम जेठी परअम्ब ।
इच्छानन्तरु ञानु चे निष्कलु
यव्यु अवतरन्द महभूतमयम्ब ॥४॥

इच्छायाः प्रसरो यस्मात् स इच्छाप्रसरः इच्छाप्रसरकारणमीश्वरः, अकारश्चतुष्कलः यस्य 'रौद्री वामा ज्येष्ठा अम्बा' कलाः, तदुद्भूतो ज्ञानप्राक्कोटिभावी इच्छासमुदयः, एवं विश्वनिर्माणोपकरणमिच्छापूर्वकमेव ज्ञानं निष्कलम् तस्मादेव महाभूतान्यवतरन्ति इति,

'शून्यात्प्रसर उत्पन्नः प्रसरादः समुत्थितः ।
अकाराद्विश्वमुत्पन्नं विश्वं पञ्चात्मकं जगत् ॥'

इत्यागमदृशा अकारः प्रथममाविर्भूतः, तथा च नामविवर्ते मातृकारम्भणप्रभूत आदिवर्णः, रूपविवर्ते चावटरूपः स एव – इत्युभयथा अकार

---

पं० १६ ख० पु० चाङ्कुषरूप इति पाठः ।

एव विश्वप्रसरस्यादिकोटिः, स एव व्यापकत्वाद्विश्वम्, तस्याकारस्य कलाभिश्चतसृभिरवयवनिष्पत्तिः, ताश्च

'आदावस्य शिरो रौद्री वक्त्रं वामा प्रकीर्तिता ।
अम्बिका बाहुरित्युक्ता ज्येष्ठा चैवायुधं स्मृता ॥'

इत्यादिना अयमाद्यक्षरसंप्रदायो यथागुरुमुखम्, एवमिच्छामात्रमेव जगन्निर्माणे परिकरः न बाह्यार्थवादिवन्महाभूतप्रकृतिः, एवमिच्छोपकरणं विश्वकर्तुर्विश्वनिर्माणं च, अतश्च महाभूतानि इच्छाकाले स्वयं तत्कालमुद्यन्ति न संभृतसंभारगत्या यथोपयोगं ब्राह्मसृष्टिवत्प्रयुज्यन्ते, यतो निरुपादाना इयमैश्वरी सृष्टिः ॥४॥

अथ ब्राह्मसर्गाधिष्ठिता या भूतसृष्टिस्तां निरूपयति ।

तव्यु आदिवन्न कुहरा नभु उदियो
तस अङ्गलग्ग पवनाञीऊम ।

---

पं० ५ ख० पु० अकारस्य शिरो रौद्री इति शोधितः पाठः ।

उभय निष्परिशा पावकु वपयो
सेदु सलिल आशाजी भूम ॥५॥

---

तत आदिवर्णकुहरान्नभ उदितं
तस्याङ्गलग्ना प्राभञ्जनोर्मिः ।
उभयनिघर्षात्पावकोत्पत्तिः
स्वेदसलिलमाश्यानं भूमिः ॥ ५ ॥

ततः आदिवर्णकुहरात् हृदयात् नभ आविर्भूतं, तस्याङ्गलग्ना अन्तश्चान्तः प्राभञ्जनी ऊर्मिः – लहरी, तयोर्नभोनभस्वतोरुभयोर्यः संघर्षः – निष्पेषणम् ततः पावकस्य अग्नेरुत्पत्तिः, ततो निष्पीडनादापः स्वेदद्रववत् स्रवन्ति, ताश्च वाताधिक्ये शीतस्पर्शबाहुल्यात् घनीभूताः सत्यो भूमिभावं प्रथयन्ति, ता एव आपः कुले शुक्रशोणितरूपा घनकलिलपेशीरूपाभिः क्रमेण पोषिताः सत्यो गर्भतां दधते ॥ ५ ॥

तदेव विभज्याह

लोहितमदबिन्दू जू भिन्ने
वातजिमिर तेन मेलेसु आय ।
ते ये रात हले परु दिन्ने
गण्डागण्डथिय्य इताय ॥ ६ ॥

रक्तशुक्रबिन्दू द्वौ भिन्नौ, वातलहरी तयोः संमेलनाय उदिता, तत आद्यक्षरसंप्रदायः, एतादृशी ग्रथितग्रन्थिर्वर्णरूपा आविर्भूता, यत्सिद्धपादा आदिदिशुः

'पिथिव आपा ता तेजु तकारुसु
वातशक्तितिर्यगअवयवति ।
नभुरा पञ्च अक्षु अकारुसु
पहुय सिष्टि पसरु आकलति ॥'

इति । अत्र हि आद्यक्षरस्य प्रथमो भागः तकाररूप अकारः यत्राधः प्रथमाङ्कसंनिवेशा पृथ्वी, मध्यग्रन्थिरापः, शिरः शृङ्गाटकाकारं तेजः, ततः पृष्ठस्थितो भागो रेफाकारसंनिवे-

शाद्रेफः स एव विततत्वात् आच्छादकत्वेन नभसा रूपितः, तयोस्तकाररेफयोर्मध्यसंधिभागस्तिरश्चीनो हकाराकारो वायुः, एवं पञ्चभिर्दृब्धः अयमादिवर्णः, स एव भूतसर्गे आवटाकारेण गुरुमुखदृशा प्रथते, एतदेवोक्तम् 'ते ये रातहले परु दिन्ने' इति । सोऽयं जन्मकालः ॥६॥

अत्र एकैकस्य महार्थतया प्रसरः स्थित इति, तदाह

त्वच पलु रद नख हड्यु रसु रजु
कपु वसु मेड कोध मुखभास ।
फह लोयनहठपाको जठरजु
पान कोष्ठ मुख श्रुति हृदन्नास ॥७॥
अकु अकु पञ्चभूत पञ्चगुनो
ईदृश भूतसग्ग निष्पत्त ।
न्युमज्जा दौसरु सारसनो
एह आवठ मानसपीठ वितत्त॥८॥

पं० १४ क० पु० भूत छुम इति पाठः ।
पं० १६ ख० पु० आवध इति पाठः ।

त्वक् मांसं दन्ता नखा अस्थीनि, इति–पञ्चगुणं कठिनं देहगतं पृथ्वीतत्त्वम् । रसः रक्तं कफः वसा मेद, इति–पञ्चधा जलतत्त्वम् । क्रोधः, तथा मुखभाः–मुखगतं तेजः, तथा कायोष्मा, नेत्राग्निः–चक्षुर्गतं प्रकाशकं तेजः, जाठरोऽग्निश्च, इति–पञ्चधा तेजस्तत्त्वम् । तथा प्राणाः–प्राणापानसमानोदानव्यानाः पञ्च वायवः, यत्र 'प्राणः' प्रकर्षेण प्राधान्येन प्रगुणतया अन्यवायुवैलक्षण्येन अननात्प्राण इति, 'अपानश्च' अपकर्षेण तनावधोगमनेन अननात् अपानः इति, 'समानश्च' समं समतया सर्वाङ्गेषु समीकरणेन अननात् समान इति, 'उदानश्च' उत् ऊर्ध्वम् आ समन्तात् प्राणसाहचर्येण अननात् उदान इति, 'व्यानश्च' विशेषेण आ समन्तात् सर्वजीवाश्रयमर्मसु अननाद्यान इति, एवं प्राणाः सामान्येन पञ्च, तच्च पञ्चधा वायुतत्त्वम् । तथा जठरमुखश्रोत्रहृदयनासिकागत आकाशः पञ्चधा नभस्तत्त्वम्, इत्थं

विभागेन शरीरे पञ्चशः पञ्च भूतानि । तैश्चतुर्दशसु भुवनेषु चतुर्दशविधभूतसर्गनिष्पत्तिः । यत्राष्टधा देवयोनिः पञ्चधा तिर्यग्योनिः मानुष्यं चैकधा, ततो भूतसर्गात् अधिकारिशरीराः प्रबोध्याश्च द्विसराः – द्वाभ्यां सरन्ति गच्छन्ति इति द्विपाज्जातीयाः सारभूता उपदेशपात्रम् । एतान्येव पञ्च भूतानि प्रधानेन तद्गुणपञ्चकेन तन्मात्रव्यपदेश्यानि, बुद्धिकर्माक्षाश्च स्वदेहविशेषरूपा भूतमया एव, अन्तःकरणानि तन्निदानान्येव, तत्प्रकृतीनि च सत्त्वरजस्तमांसि समुदितानि, प्रकृतिः पुरुषस्य सहजसिद्ध आश्रयः । यदागमः

'अमूर्तस्त्वीश्वरस्तत्र तिष्ठत्यानन्दलक्षणः ।'

इति ॥ ७–८ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
द्वितीय उदयः ॥ २ ॥

---

पं० ११ ख० पु० प्रकृतिपुरुषस्य इति पाठः ।

# महानयप्रकाशः ।

अथ तृतीय उदयः ।

एवं पारमेश्वरब्राह्मान्सर्गान्निरूप्य यदर्थोऽयं समारम्भस्तन्महार्थस्वरूपमवसरप्राप्तमुपक्रमते।

[ ..........................

.......................... ][1] ॥१॥

अथ कोऽयं महार्थो नाम, किं चक्रचक्रेश्वरीसंनिवेशविशेषस्मरणमात्रम्?, नैतत् – महान् चिदद्वयदशावेशो 'महार्थ' इति ब्रूमः, तथा च – पञ्चेन्द्रियग्राह्याणां षड्जशाटीशकटशाडिवशल्कधूमादीनां पदार्थानां मध्यात् एकेन्द्रिय-

१ संभाव्यते – यदत्रैकेन मूलपद्येन भाव्यं, यत् त्रुटितम् अधस्तनव्याख्यास्थलव्याख्यानकं प्रतिभाति, तद्व्याख्याशयश्चाग्रिमपद्येन भिन्नवाच्यार्थेन न संयुज्यते – इत्यनुमीयते ।

पं० ८ ख० पु० शडिव इति पाठः ।

ग्राह्याणां वीणावंशमृदङ्गादीनां भिन्नानामपि श्रोत्रेन्द्रियग्राह्यता नाम अनुगामिनी सर्वेषाम् 'एकैव' इति ज्ञेया, भेदो द्विधा स्वीयज्ञानैः सह, तद्वत् ज्ञेयानामप्यभेदः इति तृतीयः, तद्वत् ज्ञानानामप्येकेन्द्रियनिष्ठितानामनेकेन्द्रियनिष्ठितानां च परस्परं सर्वप्रकारम् इति चतुर्थपञ्चमौ अभेदावेव इति, ज्ञानजातिरेकेन्द्रियनिष्ठितानेकेन्द्रियनिष्ठिता वा ज्ञातृपरमार्थैव इति षष्ठः अभेदः, ज्ञातारश्च प्रत्येकं ज्ञातृत्वमात्रप्रकृतयः ज्ञातृत्वमात्रप्रत्येया इति सप्तमः, ज्ञातारश्च परप्रमातरि चिन्मयेन रूपेण परमाद्वयमयीं दशामनुभवन्ति इति अष्टमः, इति – सर्वप्रकारमास्थितस्य अस्य अद्वैतस्य सर्वास्ववस्थासु चिदद्वयाविप्रमोषो नाम महार्थशब्दव्यपदेश्योऽस्तु ॥ १ ॥

---

पं० ९ ख० पु० ज्ञानपरमार्थैवेति पाठः ।
पं० १० क० पु० प्रत्येकं ज्ञातृपरमार्था इति पाठः ।

किं च

यसु यसु जन्तुस संविद यस यस
नील पीत सुख दुःख सरूप ।
उदयिसदत्तसमाञी समरस
कमकम्पन तस तस अनुरूप॥२॥

समानेति संविदेका एव सामान्यस्वभावा महासत्ता चित्सामरस्यव्यपदेश्या शान्तस्वरूपा परं विश्रान्तिस्थानं तदेव पर्यन्तदेवीधामैकक-मस्ति, तस्य किञ्चिदुच्छूनता संविन्मात्ररूपा भावाभावोभयव्यापिका सदसद्व्यपदेशसहा, य-दुपनिषद्वचः

'सदेव सोम्येदमग्र आसीत्'
'असदेवेदमग्र आसीत् ।'

इति या विश्वप्रपञ्चस्य आप्यायकारणमधिकर-णव्यापिका संहर्त्री विश्रान्तिस्थानम् महाकु-लचारिणी सा इत्थम्, यदागमः

---

पं० २ क० पु० समथी इति पाठः ।
पं० ४ क० पु० इस तस इति पाठः ।

'चिच्छक्तिरमला शुद्धा बाह्यसंवेदनोज्झिता ।
शिवसद्भावधर्मस्था सा ह्यनाख्येति विश्रुता ॥'

इति अकुलस्वभावा तत्सकाशात् चेयं पृथक् पृथगनन्तशक्तिशालिनी चराचरान्तश्चारिणी परावाक् आत्मरूपा तृतीयभूमिकानुपातिनी विश्वमयी संवित् भासते, तथा चागमः

'तदुन्मेषवशादिच्छा समुदेति प्रसूयिनी ।
सृष्टिः सा परमा चाद्या व्यापिनीति निगद्यते ॥
यत्रेच्छा सा निपतिता बाह्यार्थे सहसैव हि ।
तच्चर्वणं स्थितिर्नाम्ना समना सा प्रकीर्तिता ॥
तत्स्वरूपं स्वमादाय संहृता तदुपेक्षणात् ।
संकोचनाद्विकासस्य संहारश्चोन्मनावशात् ॥'

इति । सा च यस्य यस्य उत्तममध्यमकनिष्ठजातीयस्य जन्तोर्येन येन इन्द्रियमार्गेण संकल्पजेन वा यादृशी यादृशी नीलपीतादिरूपतया चैतसिकसुखदुःखरूपेण वा हेयोपादेयोपेक्षणीयरूपा उदेति, सा वक्ष्यमाणवर्त्मानुगुण्येन सर्वथा क्रमभाजनं भवति, स एव 'महाक्रम' इति नयविद्भिर्गीयते ॥ २ ॥

तदेवाह

आदिकोट मज्जा अवसाना
　　तस तस ज्ञानस भूमिक अस्त ।
सृष्टिस्थितिसंहार्युजाना
　　आदिअन्तसमत्युकवस्त ॥ ३ ॥

इह हि सूक्ष्मसूक्ष्मतरकालांशगत्या उत्पल-पत्रशतस्य सममेकप्रयत्नेन वेधे एकैक एकैकस्य पत्रस्य आदिमध्यावसानभागस्पर्श इति निरंशक्षणमात्रवेधेन पत्रशतस्य त्रिशतीभूमिकावेधो भवति इति सूक्ष्मेऽपि संवित्प्रसरे प्रत्येकं भूमिकात्रयसंभवः, स्थाने च संवित्प्रसरः, तथैव संविद् उदयः स्थितिः प्रलयश्च सर्वत्रावश्यभावी, उदयोऽपि आदिमध्यावसानभेदेन त्रिधा, एवं स्थितिरपि उद्यन्ती स्थितिमती प्रत्यस्तमिता च इति त्रिरूपा, तथा संहारोऽपि प्रवर्तमानः प्रवृत्त उपशान्तश्च इति त्रिधैव संभवति, एवं च अयं स्वाभेदभिन्न उदयस्त्रिधा,

स्थितिश्च त्रिधा, संहारश्च त्रिधा इति नवधा-
भावः । तत्र च उदित्सायाः पूर्वकोटेरारभ्य
उदयस्थितिसंहाराणां प्रत्येकं त्र्यात्मनां मध्ये
व्यापकत्वेन संहारान्तकोटिं यावदेकमेवानुगामि
देवीस्वरूपमनन्तापारं समस्ति इति क्रमा-
र्थोऽयम्, आदिकोटौ मध्ये अवसाने च तस्य
ज्ञानस्य आद्यन्तसमतया क्रमव्यवस्था भूमि-
काभेदेन भासते, सृष्टिस्थितिसंहारैः भाषान्त-
रैश्च अत्तिप्राप्तितृप्त्यादिरूपैः अन्यैर्वा यथोप-
देशं सर्वत्र प्रस्तूयते, स चोक्तवत् आद्येन सह
चतुर्धा 'महाक्रमः' परिभाष्यते ॥ ३ ॥

अथ सृष्ट्यादिभाषाभिः क्रमार्थं योजयितु-
मुदयादिभाषाभिः पञ्चकार्थं निषेद्धुं चाह

इथनयसिष्टयाजी अनुभावे
उदयाजीमतभेदविधान ।

---

पं० ८ ख० पु० भाषान्तैरर्त्तिप्राप्तीति पाठः ।

आवनगवनयव्युउव्भावे
सो अक्कुठावु व्यापकभोनान ॥४॥

अस्मिन्नुत्तरघोरवह्निविशेषरूपे महानन्दव्यपदेश्ये 'चतुष्टयार्थ' इति परिभाष्यते – सृष्टयादिचतुष्टयमेव क्रमार्थत्वेन प्रतिज्ञायते इति उदयावभासचर्वणकालग्रासविश्रान्तिरूपभाषाणां पञ्चानां कोऽवकाशः तदन्यंपीठान्तरभाषाणां पञ्चकरूपं विधानं प्रसिद्धम् न तु अत्तिप्राप्तितृप्तीनां चतुर्थी विरतिः, पञ्चमी च विश्रान्तिरिति श्रूयते तदर्थमाह – आवनेति, अवतारप्रत्यस्तमयौ यतः स्थानादुत्प्रेक्ष्येते तदेकमेव व्यापकं ज्ञानजातीनामस्ति इति विरतिविश्रान्त्योः कालग्रासविश्रान्त्योर्वा अनाख्यरूपात्को भेदः, कालग्रासो हि प्रत्यस्तमयः, यदागमः

'व्यापिनी सृष्टिकार्यस्था समना संस्थिता स्थितौ ।
संहारे चोन्मना ज्ञेया शक्तिराद्या तु सर्वगा ॥'

इति । तथा

---

पं० ४ ख० पु० परिभाषिते इति पाठः । अग्रिमेणान्वयार्थकोऽस्ति ।

'कार्यतस्तु भवेत्ख्यातिर्विनिवृत्तौ कथं हि सा ।
कार्यत्रयविनिर्मुक्ता ह्यनाख्येया प्रकीर्तिता ॥'

इति । यश्च पञ्चश्लोकार्थोऽपि दृश्यते स वामेश्यादिपञ्चकप्रसररूपः इति नावद्यम् । ननु

'वृ····द्यः [च] कौली
श्वेता स्थैर्यं च संहृतिश्चण्डी ।
शुष्का कालविनाशो
विश्रान्तिर्भैरवश्चेति ॥'

इति क्रमार्थ एव पञ्चधा परिभाषितः तदेतदत्यल्पमुक्तम्, इह नये चतुष्टयार्थपरिभाषा प्रतिज्ञाता इति महाक्रमश्चतूरूप एव, यस्तु प्रस्थानान्तरेषु भैरवमूर्तेः पञ्चमस्य पूज्यतया पञ्चकार्थः उपदिष्टः स कथमन्यथाभवितुम् अर्हति?–इति यथोक्तमेव न्यायः ॥ ४ ॥

तदेव युगलकेन प्रपञ्चयितुमाह

शिव सभाव परशत्ति सपन्दे
व्यापन अंकुरिय बहि सिष्ठ ।

उत्थे संमुखसमनाफन्दे
भावपरामरिशेथितिनिष्ठ ॥ ५ ॥
भावसर्थ पुक्षवेत परामुख
पल्लटेत उम्मन संहारु ।
तितथ शांभवधामिसंमुख
नाख्यिशमेतकरि परिहारु ॥ ६ ॥

(युगलकम्)

शिवस्वभावैव शक्तिः न वस्त्वन्तरम्, इत्येकमेव शिवव्यपदेश्यं शक्तिव्यपदेश्यं च वस्तुतत्त्वं नापूर्वं किंचित्, एवम् आद्यैव शक्तिः स्पन्दनशीला बहिर्विषयोन्मुखी व्यापिनीभावेन सृष्टिव्यपदेशभाजनम्, तत्रैव गाढतरान्तश्चान्तर्भावावेशेन समनारूपा सैव 'स्थितिः' इत्युच्यते, ततश्च भावस्वरूपमात्मसात्कृत्य प्रत्यावृत्तस्वभावा उन्मनायमाना सैव संहारव्यपदेश्या भवति, पुनरपि सा आद्यैव शक्तिरनुपाधिरित्यनाख्येया पूर्ववच्छांभवरूपतया उच्यमानशक्ति-

रूपा परिहारम् – उपाधिपरित्यागेन विश्रामं भ-
जते, यदागमः

'चित्स्यादिच्छावती सृष्टिस्तत्र शक्तिः स्थितिः स्मृता ।
ततो निवृत्तिः संहारोऽनाख्या त्वाद्यन्तमध्यगा ॥'

तथा

'अनाख्या चित्परा शुद्धा तदिच्छा सृष्टिरिष्यते ।
स्थितिस्तन्मज्जनं मध्ये संहारस्तन्निवर्तनम् ॥'

तथा

'इच्छानुपातिनी सृष्टिः स्थितिश्चित्तचमत्कृतिः ।
तदभावेन संहारो यस्यान्ते देवतानयः ॥'

इति । तथा

'एकस्य चित्प्रवाहस्य क्रमभेदः स्वगोचरे ।
इच्छाज्ञानक्रियाभिर्यः क्रमार्थः सोऽभिधीयते ॥'

तथा

'भेदैश्चतुर्भिरेकस्यां शक्तौ यत्क्रमणं क्रमात् ।
सृष्टिस्थितिलयानाख्यैः स क्रमः परिकीर्तितः ॥'

इति क्रमार्थप्रतिपत्तये संवादः ॥ ५–६ ॥

ननु किमियमेकैव संवित्, उत अनुभूति-विशेषात् पृथक् पृथक् भूमिकाविशेषा एव एते? इति शङ्कां परिहर्तुमाह

अकचिदजनहडनदवहवाञी
दशदशपरिशेतपरिवाहान ।
वामेश्युपञ्चिमिलवाञी
पञ्चतनियुवाहनवाहान ॥ ७ ॥

एकैव चित् नीलाद्यवभासरूपा अस्थिरह-ठौघवती कुल्येव पश्चात्प्रतिसंहृतस्वभावा अ-ग्राग्रगामिप्रसरत्सहजरूपा लक्ष्यते, सोऽयं नि-रुपाधौ चित्स्पृष्ट्याद्युपाधिकृतो भेदः, सा चतुर्धा भूमिकाभेदं स्पृशन्त्यपि एकत्वेन प्रतीयमाना षोढा षोढा ज्ञानक्रियाभेदेन द्वादशमरीचिता-माप्ता, तस्याश्च वामेशीपञ्चकाध्यासेन प्रतिवा-हमयं वक्ष्यमाणवत्पञ्चधाभावः ॥ ७ ॥

उक्तार्थमेव विश्रामयितुमाह

पश्शु महाथु एषु जलजाङ्गल
ज्ञानज्ञेयु आपिपावेत ।
ते ये उभयलोकशुभमङ्गल
निज परान अद्वयुभावेत ॥ ८ ॥

एष महार्थो दृश्यतां – स्वानुभवप्रत्यक्षेण साक्षात् क्रियताम्, क्व? इत्याह – जले जङ्गले स्थावरजङ्गमे इत्यर्थः, इन्द्रियवृत्तिप्रसरे भावस्य वृत्तिविषयतायामक्षसमक्षता न दुर्वचा इत्युक्तम् पश्शु इति, भावस्य ज्ञेयत्वं नाम न स्वभावः अपि तु ज्ञानसापेक्षता ज्ञानगतो धर्मः, न हि परापेक्षो भावस्वभावो भवितुमर्हति, ततश्च ज्ञेयता नाम ज्ञानवृत्तिः ज्ञानाभिन्नैव, ज्ञानं च आत्मनो बहिर्मुखीभावः, यत्स्तुतं स्तोत्रमालायां मयैव

'विलोक्यते चित्रपटे यथोभयं
पटैक्यमन्तर्वपुषां गणो बहिः ।

पं० १३ ख० पु० ज्ञेयवृत्ति इति पाठः ।

अखण्डधाम्नोऽन्तरमुष्य वेत्तृता
ज्ञानत्वमक्षान्तजुषां चिदर्चिषाम् ॥ '

इति, वहिर्मुखता च अपरिपूर्णस्य उत्कलिकाकल्लोलितस्य भवति – इति पूर्णस्य आत्मनो ज्ञानवृत्तिता अस्ति इत्युक्तम् ' ज्ञान ज्ञेयेति ' ज्ञानज्ञेयौ आत्मस्वरूपावेव भावयित्वा इत्यर्थः, अतश्च आत्मनः परिपूर्णा वृत्तिर्महार्थः प्रतिपन्नो भवति, एतदेव उभयलोकाविरुद्धं शुभं मङ्गलं निजानां परेषां च यदद्वयीभावनं नाम इति दर्शनार्थसतत्त्वम् । एवं महार्थस्वरूपं पारम्पर्येण पीठवरे गुप्तमस्ति इति समासादिह सूचितम् ॥ ८ ॥

एतदेवाह

नाथेपवनपीठआदिष्टो
बहिअन्दरपरमाथुकमोन ।
अवतारेभूतदयाविष्टो
सो ये कमसमुदायुवमोन ॥ ९ ॥

श्रीमन्मकारदेव्याः पीठवरे प्राप्तादेशेन श्री-ज्ञाननेत्रनाथेन बाह्यान्तरस्थम् आदिदेवीस्वरू-पसतत्त्वं यत्साक्षात्कृतं तदेव भूतदयाविष्टेन सता क्रमार्थतया कथनपूजनाभ्यां वान्तम् – इति ओवल्लीसूचनम्, तदेव प्रस्तूयते ॥ ९ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
तृतीय उदयः ॥ ३ ॥

---

अथ चतुर्थ उदयः ।

अथ पीठचक्रम्

सो ओड्डियानु शच्ची उल्लसने
पीठु मशान क्षेत्र मेलापु ।
यागु उड्डअनुभव परिकलने
तथ आवठ पञ्चन कु अपलापु ॥ १ ॥

उड्डियानं – पीठे शक्तेरुल्लसनेन, शक्तिरत्र उ-ड्डीना इति यस्मिन्नावठपीठे प्राचुर्येण अनवरतं

पीठवासिनां शक्तिः उड्डीना – उल्लसन्ती दृश्यते इति आवठसमानं पीठम् ओड्डियानं निरुच्यते. वहिश्च तत्प्रणवपीठं देवतासंकेतस्थानम्, तस्मिन्नावठस्वरूपे पीठश्मशानक्षेत्रमेलापयागाः अनुभूयमानभूमिकाप्रामाण्याद्वक्ष्यमाणगत्या विभज्य निर्दिश्यन्ते, तेषां को नाम अत्र अपलापः ॥ १ ॥

एतदेव प्रस्तोतुमाह

सो पीठु ए सकलवस्तु लङ्करनो
　　अस्वर पनवरूप स्वपरान ।
जङ्गमान जानौ पीठपनो
　　चिन्मय योनद्यु लिङ्गु शिरान ॥२॥

तत्पीठमेव सर्वप्रकारं समस्तमहानयालङ्कारभूतम् – आश्रयभूतत्वात्, इत्थं तस्यास्वरप्रणवापरपर्यायस्य स्वपरेषां जङ्गमानां सदृशं पीठत्वं मन्तव्यम्, येषु पीठेषु चिन्मयो लिङ्गरूपी देवः शिरः, एवं कर्मेन्द्रियाश्रयत्वेन कायस्य

पीठत्वम्, ज्ञानशक्तिरूपत्वात् शिरसश्च लिङ्ग-त्वम्, अतश्च यद्यत्पाञ्चभौतिकं तत्तत्पञ्चानां पीठश्मशानादीनां प्रतिष्ठास्थानम् देवानामा-यतनमिति । यथा निजशरीरे प्रतिपत्तिर्भक्तिश्च तथा सर्वप्राणिगतशरीरेषु, यथा निजशरीरस्य अधिष्ठाता चिन्मय आत्मा तथा सर्वशरीरान्त-श्चिन्मय एवैक आत्मा, स चैक एव उदपात्रे-ष्विव अर्कप्रतिबिम्बः सर्वप्राणिगतो मन्तव्यः । इत्थं विशेषेण सर्वत्र लिङ्गपीठप्रतिपत्तिर्भाव-नीया – इति पीठस्वरूपम् ॥ २ ॥

एवमुक्तगतिवद्विभजन्नाह

भाव पिशो तिन समु चिज्जलने
गासक कालिशरीरु पिशन्दु ।
वित्तिचक्कु तोदशमि गलने
ए पीठि तिन मिशान यसन्दु ॥ ३ ॥

भावस्तृणसमश्चिदग्निना स्पृष्टः – इति इ-न्द्रियवृत्तेः स्वविषयीभूतभावसंहारः श्मशानम्,

ग्रासकाः प्राणाश्च कालिशरीरं स्पृशन्ति तत्र वि-
श्राम्यन्ति इति कालग्रासो द्वितीयं श्मशानम्,
समस्तवृत्तिचक्रं त्रयोदशे गलति इति महासं-
हारस्तृतीयं श्मशानम्, विषयस्य स्वमरीचि-
देव्या यद्ग्रसनं तदेकम्, प्राणस्य कुलाभ्यन्तर
एवाप्राणभूमौ उपशमो द्वितीयम्, सर्ववृत्तीनां
श्रीकालिकावपुष्युपशमनम् इति तृतीयम्, ब-
हिस्तत् करवीरस्वरूपम् ॥ ३ ॥

अथ क्षेत्रपालस्वरूपम्

क्षेत्रशरीरुएशुतसपालकु
आपा तिए वाच्यु उपलक्षु ।
नाहतनादनदि जग चालकु
सो चुहष्टन वन्नान विवक्षु ॥ ४ ॥

क्षेत्रं शरीरं, तस्य पालकोऽधिष्ठाता आत्मा, यद्गीतम्

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेद तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥'

इति । तस्य च चत्वारो भूमिकाभेदाः यत्र क्षेत्रे स एव परारूपस्तिसृभिर्वाग्भिरुपलक्ष्यते, ताश्चतस्रो भूमिकाः—अनाहतनादनदनात्पश्यन्तीरूपः, विकल्पकल्लोलितत्वात् मानसव्यापारेण जगत् कलयन् चालयति इति जगच्चालको मध्यमारूपः, चतुष्षष्टिसंख्यानां वर्णानां विखराक्षराणां प्रयोक्ता वैखरीरूपः, इति—तिसृणां वाचामधिष्ठातृभूतः तुरीयपरावाग्रूप आत्मा वेद्यवर्गग्लपनस्थानम्, इति—बलवत्तरो बहिरपि संकेतकस्थाने स्वीयपरकीयप्रत्यूहपरिरक्षापरः क्षेत्राधिपः पीठवर्ती पूज्यः ॥ ४ ॥

अथ मेलापमाह

अक अक वाहदेव अक्लेशे
　　पावेय निजविषये मेलापु ।
क्षनक्षन आदिदेव आदेशे
　　बहुपीठगतो मेलापकलापु ॥ ५ ॥

एकैका वाहदेवी अक्लेशेन स्वारस्येन एकैक-

स्मिन् निजनिजविषये आदिदेव्यधिष्ठानेन मेलापमापादयति, इति – इन्द्रियदेवतानाम् आवठपीठगतानां मेलापः, स च पृथक्पृथक् – इति द्वादशीभावेन कलापीभूतः ॥ ५ ॥

अथ यागस्वरूपमाह

देवि कालसकर्षन पेक्षेत
याागिमह भैरव उपचारु ।
मन मत ममत चरू आकर्षत
पान वडेत आपए उपहारु ॥ ६ ॥

परा देवी कालसंकर्षिणी समस्तवृत्तिप्रत्यस्तमयाय महायागे भैरवस्य मनोमत्यहङ्कारान् चरूनाकृष्य प्रददाति, ततः प्राणानां परितो वेष्टयित्री निजापरप्राणानां परिवेष्टनमवलम्ब्य स्वात्मसामरस्याय न ग्रासगृध्नुतया विश्वविलापिका – इति तान्प्राणानपि विलापयन्ती चिन्मात्रप्रकृतिः सती पतिं कुलेश्वरमतृप्तमाकलय्य

पं० १३ ख० पु० निजं परं प्राणानामिति पाठः ।

आकुलीभूता तं चिन्मात्रमात्मानं तस्मै भैरवाय उपहारीकरोति, इति – स्थूलसूक्ष्मपरत्रेधा मध्ययागः, सामरस्यभूश्चेयम्, तथा च श्रीराजिकायाम्

' भुक्त्वा विश्वमशेषं
तृप्तिं न यदागतः कुलेशानः ।
देव्या तदा स्वदेह-
श्चरुरत्र निवेदितः कुलाधिपतेः ॥ '

इति, तांश्चतुरो निवेद्य आकुलीभूता आत्मानं परावाग्रूपं समरसीभावयति इति उपहारार्थः । एवमयं भगवत्या अलंग्रासपरया मत्यहंकृन्मनः-प्राणानां समर्पणादाकुलीभावेन आत्मनः सामरस्येन पञ्चचरुप्राशनो यागो विहितः ॥ ६ ॥

एतदेव अन्यमध्ये निगमयति

पीठु महाथु इमहावीरो
पञ्चवाहु कमु वा महिताथु ।

भव निव्वानदच्यु विभजीरो
प्रनुसव्वगतो भावि न परमाथु॥७॥

इत्थं पीठाख्य एष महार्थः, महार्थसंप्रदायत्वाच्छारीरोऽन्तरङ्गः पञ्चवाहो महाक्रमगर्भितश्चतुष्टयार्थरूपो वा महाक्रमो महार्थो ज्ञेयः, ततो लोकयात्रायां पीठत्वेन तथा निर्वाणदशायां विश्रमभावेन निरुपाधिवामेशीरूपेण अथापि महाक्रमेण वा इति, एष एव महार्थो विभज्य प्रकटेन प्रचुरप्रकारेण स्थितः परमार्थत्वेन संभावनीयः, वस्तुतस्तु पीठचक्रादारभ्य समयविद्यान्तं समेन साम्राज्येन महार्थ एव वक्ष्यमाणवत् बोभवीति इति भाव्यतां, नात्र फल्गुसारभावः कश्चित्। इति पीठचक्रस्वरूपम् ॥ ७ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
चतुर्थ उदयः ॥ ४ ॥

## अथ पञ्चम उदयः ।

अथ वामेशीसंप्रदायः प्रकाश्यते, यत्रायं समाक्षेपेणोपक्रमः

गुरुदेव्यु अकअकथियदेवत
अन्तरभाव परस्परकित्त ।
याखेत क्षीरसमुद्र सए कत
यन्याहश्चित्तन्यानृत्त ॥ १ ॥

गुरुक्रमस्य गुरुक्रमो देवताक्रमश्च सर्वथाधिधिष्ठाता अन्तर्यामी अन्तर्भवति, देवताक्रमस्य तु देवताक्रम एव यथोत्तरमन्तर्भवति – व्याप्यव्यापकभावस्य एवंरूपत्वात्, गुरुदेवतयोर्मध्यादेकैका देवता उत्तरोत्तरम् अधिष्ठातृभावेन अनन्तरामनन्तरां व्याप्य इह दर्शनस्थितिमनुबध्नाति, तेन या काचिदेकैका देवता यतो यतश्चक्रमध्यात् उपास्यते सा सा उपासिता

पं० ३ क० सर्वाक्षेपेण इति पाठः ।

सती भावितस्य पर्यन्तदेवीवत् तदधिष्ठानेन फलदा भवति, इति–व्याप्तिफलम्, यथा क्षीराब्धेश्चुलकशोऽपि पीतात्सुधापानफलम्, तदुक्तं

> 'प्रादेशोऽपि ब्रह्मणः सार्वरूप्य-
> मनतिक्रान्तश्चाविकल्प्यश्च ।'

इति ।

> 'पीठचक्रे त्रिधामस्थाः शाकिन्यश्चक्रनायिकाः ।
> वामेश्यः क्रमदेव्यश्च व्यापिकाः स्युर्यथोत्तरम् ॥
> व्याप्तिः क्रमेणावरणमुत्तराभिर्यथायथम् ।
> इति व्याप्तिः पीठचक्रे पञ्चधैव विधीयते ॥
> त्रिधामस्थाश्च तिसृभिस्तिसृभिः शाकिनीगणः ।
> द्वाभ्यां चक्रेश्वरीव्याप्त्या वामेश्यो देवतादृशा ॥
> क्रमार्थस्य क्रमार्थोन्तर्व्यापकः स्याद्यथोत्तरम् ।
> इति व्याप्तिविभागोऽयं बाह्यान्तः सर्वगोचरः ॥'

एकैका देवता उत्तमाधरवर्तिनी अधरवर्तिन्या

पं० १२ क० पु० धामस्थाश्चतसृभिरिति पाठः ।
पं० १६ ख० पु० उत्तमाधरवर्तिन्याधरवर्तिन्या देवतया इति पाठः ।

देवताया अन्तर्भावेन शक्त्यात्मना न व्यक्ति-
रूपेण अधिष्ठानं कृत्वा वर्तते, एवमेकामेकां
व्यक्तिं तदन्या उत्कृष्टा देवताः शक्तिरूपेण
अधिष्ठाय वर्तन्ते, अतश्च सा माहेश्वरी क्षीरा-
ब्धेरधिष्ठातृदेवतेव अखण्डेन एकेन दर्शनेन
अथ वा अखण्डितत्वतोऽनेकेन चुलकग्रहणमा-
त्रेण अनेकैः पिपासुभिर्यतो यत आत्मसाद्भा-
व्यते ततस्तरङ्गजनितेन मनोहारिणा शब्देन
स्पर्शेन आह्लादकेन रूपेण आश्चर्यभूतेन सुधा-
समेन आस्वादेन दिव्यसुरभिणा आमोदेन
सर्वेषां पञ्चेन्द्रियप्रीणनरूपां जनयति, इति–
परोऽयं व्याप्तिविशेषः । तथा च प्रथमतः पीठ-
चक्रस्यैतावत् पीठाद्याः पञ्च श्मशानक्षेत्रपाल-
मेलापयागाः भूतैः पञ्चभिः पृथिव्याख्यैः शक्ति-
रूपेण अधिष्ठिताः – इति तेषां धामक्रमः, तथा
समस्तेन अक्षरेण तत्कलाभिश्च रौद्रीवामाज्ये-
ष्ठाम्बाभिर्व्याप्ता – इति पञ्चभिर्वर्णक्रमः, तथा
च सिद्धस्य सुभाषितम्

'पिथिव आपा ता तेजु उकारुस ।'

इति । सोऽयं वर्णक्रमः, तथा रौद्रीश्वर्यादिभिः क्रमेण संविद्रूपतया व्याप्तिश्च कृता, इति तेषां पीठादीनां संवित्क्रमः, तथा पञ्चपिण्डार्णैर्मकाराद्यैः खान्तैः — इति मात्री व्याप्तिः, तथा च कुलसूत्रेषु उक्तम्

'कुलपीठक्षेत्रादिवर्णपञ्चपिण्डप्रणवव्यपदेश्यमखिलाभासकरूपाया अहंभावाभिमतसंविदः समाश्रयभूतमात्मायतनं शरीरम् ।'

इति, अतश्च काय एव प्रणवपीठमिति, बहिश्च पीठस्य प्रणवाख्या — नाभिसंस्थानस्य पञ्चवेष्टनत्वात् तदनुकारि प्रणवेन प्रथमोत्पन्नत्वात्तस्येदं नाम । तथा च 'ओड्डियानं' ओकाराद्यत्वात्तु नाम इदं शक्त्युल्लासबाहुल्याच्च उल्लासार्थेन ओड्डियानमिति, ओड्डियानाख्या इति वाचकवाच्यव्याप्तिः, तथा सृष्टिस्थितिसंहारैश्चाधिष्ठीयन्ते इति संवित्क्रमः । देवीधाम्नः

पं० १४ ख० पु० द्यत्वात्तन्नामेति पाठः ।

सकाशात् पञ्चाप्यक्रमेण निर्गतास्तत्रैव प्रतिष्ठिताः तत्प्रकृतयस्तदेकजीवितास्तद्विश्रान्ताः, इति – निरावरणधामक्रमः । अथ वामेशीनां व्याप्तिः – परोऽयं पञ्चवाहः यस्य प्रातिस्विकचिद्भूमिकाविशेषैर्व्यापकस्य स्थाननैयत्यं नास्ति, अपरस्तु पञ्चवाहः श्रोत्रादिप्रसृतनियतस्थानो नियतव्यापारश्च तस्य पञ्चवाहेति लोकव्यवहारो मोहात् उपचाराद्वा इति स निषिद्ध एव ॥ १ ॥

इदानीं षड्भिः कपटकैर्वामेशीचक्रस्वरूपाविष्कारः

वामेशीसव्वगसब्भावे
मुण्डिबुद्धीन्द्रियभावेन ।
दण्डिकम्मेन्द्रिय अनुभावे
ज्ञानक्रियु निज विषयवायेन ॥२॥

पं० ८ क० पु० मोदात् उपचारादनिषिद्ध एव इति पाठः ।
पं० १५ क० पु० विषयक्षवेन इति पाठः ।

एका एव परा चिच्छक्तिर्महासत्तास्वभावा चिन्मात्रशान्तस्वभावा, तस्याः किंचिदुच्छूनता नाम भावाभावोभयव्यापिका सदसद्व्यपदेश-सहा विश्वप्रपञ्चस्य कारणम् अधिकरणं व्यापिका संहर्त्री विश्रान्तिस्थानं महाकुलचारिणी अकुलस्वभावा स्फुरत्तासारा शक्तिः, तस्याश्चेयम् ऊर्मिरूपा परिग्रहवर्तिनी चराचरान्तश्चारिणी परावाक् आत्मरूपा तृतीयभूमिकानुपातिनी विश्वमयी भासते, यस्या अयं त्रिधा रावक्रमेण शाक्तोदयक्रमेण मरीचिविस्फारोदयक्रमेण च कुलगतो निजो विस्फारः, स च रावक्रमोऽव्यक्तोऽनाहतो घोषादिर्दशधा, व्यक्तो हतश्चानन्तोऽपि अकारश्च उकारश्च इत्याद्युन्मनान्तः द्वादशधा ओंकारमात्रारूपः, शाक्तोदयश्च

'जन्ममूले तु मायाख्यो ग्रन्थिर्जन्मनि पाशवः ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥

---

पं० २ क० पु० चिन्मात्रं शान्तेति पाठः ।
पं० १० क० पु० शक्त्युदयेति पाठः ।

कारणस्थास्तु पञ्चैव ग्रन्थयः समुदाहृताः ।
इन्धिकाख्यस्तु यो ग्रन्थिर्द्विमार्गास्तमनः शिवः ॥
तदूर्ध्वे दीपिका नाम तदूर्ध्वे चैव बैन्धवः ।
नादाख्यस्तु महाग्रन्थिः शक्तिग्रन्थिरतः परम् ॥'

इति द्वादशग्रन्थिस्थानपरिमितो मरीचिप्रसरश्च, बुद्ध्यनुगतबुद्धीन्द्रियषट्कं प्राणसहितकर्मेन्द्रियषट्कमिति द्वादशधाक्षसरणिपतितकरणेश्वरीस्वरूप इति – षड्त्रिंशदात्मकः प्रथमः तस्याः परिग्रहवर्तिन्याः शक्तेर्विस्फारः, सा चैवमादिदेवी प्रथमोक्ता परतरा सर्वत्र त्रिविधेष्वपि द्वादशस्थानेषु विवृत्ता स्ववैभवस्फारेण कृत्स्नशो व्यापकत्वेन द्योतमाना तस्मिंश्च कुलगतपरादेवीप्रसरे क्रमेण तद्गतरावक्रमसमुदयक्रममरीचिप्रसरात्मककरणेश्वरीचक्रं च आविष्करोति, यत्र एकैकस्मिन्करणेश्वरीरूपे व्यक्ततया समग्रतद्रूपव्यापकत्वेन तद्वामेश्वरीपञ्चकं सामान्यरूपं

पं० २ क० पु० द्विमार्गास्तु मन इति पाठः ।
पं० ११ क० पु० स्वभावविस्फारेण इति पाठः ।
पं० १३ ख० पु० क्रमेणोद्गतरावेति पाठः ।

सर्वव्यापकं प्रतिवृत्ति कार्त्स्न्येन क्रमेण विवृत्तम्। तथा च प्रथमोन्मिषितं यद्व्योम वामेश्वरीव्यपदेश्यं स्फुरितं तद्द्वादशानां करणेश्वरीणां प्रथमोन्मेषभूमिकामध्यास्ते । तथा च खेचरीशब्दवाच्यं तासां करणेश्वरीणाम् अधिकारस्थानानि सर्वाणि समाक्रामति। तृतीयं च भूचरीनाम्ना उक्तं तासामेव करणेश्वरीणां प्रातिस्विकविषयद्वादशकं कृत्स्नशोऽधितिष्ठति । तथा चतुर्थं च संहारभक्षिणीव्यवहार्यं च वामेश्वरीरूपं विषयभोगप्रत्याहरणस्वभावं तासां द्वादशानां प्रातिस्विकविषयप्रत्याहरणंभूमिकाः समस्तनिरवशेषतया सामान्येन व्यापकरूपेण व्याप्नोति । पञ्चमं च रौद्रीश्वरीपदाभिहितं बहिरनुभूतचिद्भूमिकाविवर्तमाद्यं च निजस्वरूपमप्रमुषितस्वस्वरूपमेव अवलम्ब्य आदिदेवीवत् व्यापकेन रूपेण आक्रामति, आदिदेवीवत्सर्वव्यापिकानां निरुपाधिचिन्मात्ररूपाणां वा-

---

पं० ४ ख० पु० भूमिकामात्रेणास्ते इति पाठः ।

मेश्वरीणां नियतं कुलगतं किंचित् प्रतिष्ठानं नास्ति, यस्तु श्रोत्राद्यधिष्ठानरूपोऽधिकारविभागव्यवहारः स औपचारिको न वास्तवः। ननु करणेश्वरीपञ्चकरूपः पञ्चवाहो लोके प्रसिद्धः? नैतत्—करणेश्वरीषट्कं ज्ञानशक्तिविवर्तरूपमेकम्, अपरं च क्रियाशक्तिविवर्तरूपम्, इति करणेश्वर्यो द्वादश, तन्मध्याच्चेत्पञ्चकं पृथक् क्रियते तत्सप्त अवशिष्यन्ते तत्कथं द्वादशमरीचिसंख्याव्यवहारः, नियतस्थानप्रतिष्ठिता हि श्रोत्रादिमरीचयः स्वव्यापारविधुराः परव्यापारजात्यन्धप्रायाः ताः कथं वामेश्यादयो भवितुमर्हन्ति, यस्तु प्रचुरस्तासां श्रोत्रादिमरीचीनां लोके पञ्चवाहेति व्यपदेशः स तदधिष्ठानात्संभाव्यते, तथा च – निखिलमरीचिदेवताचक्रस्य अविशेषेण प्रथमोन्मेषवपुषा व्यापिका एकैव वामेशी, ततः करणस्थानपतिता एकैव सा खेचरी इति कार्त्स्न्येन व्यपदिष्टा, ततोऽपि घनीभूता विषयव्रातं प्रति अधिष्ठानेन कृतपाद-

प्रसारिका भूचरी विषयग्रासं विधाय अनन्तर्ब-हीरूपा संहारभक्षिणी इति, ततः अन्तर्बहिरु-भयत्र कृताधिष्ठाना लोकयात्रां पारयन्ती भेदा-रूषणया च भीषणस्वरूपा रौद्रेश्वरी इति वि-मलेनैव रूपेण द्योतते, एवं द्वादशानां मध्या-देकैका करणेश्वरी पञ्चभिः पञ्चभिर्वामेशीभिरु-त्पत्तिक्रमेण अधिष्ठीयते, इति – द्वादशानां षष्टि-र्भूमिका लक्ष्यन्ते, स च आदिदेव्या एव सर्वः प्रसरो विभावनीयः, एवम् एकैव परा चिच्छक्तिः भाविनिजप्रसरमयक्रमापेक्षया लब्धादिदेवी-व्यपदेशा भूमिकाभेदात् पञ्चसंख्यावच्छेदशा-लिनी, तथाभावेऽपि अप्रच्युतप्राच्यसहजस्वरू-पैव भवति, कल्पितश्च अस्याः पञ्चसु भूमिकासु गौणमुख्यभावः संस्कारमात्रलक्ष्यखेचर्याद्युपा-धिभेदात् भिन्न इव, वस्तुतस्तु चिन्मात्रमेव एतत् आद्यस्पन्दितं प्रथमवामेशीशब्दव्यपदे-श्यम्, एवम् अन्यूनातिरिक्तमेव खेचर्या भूचर्या ग्रासक्या रौद्रेश्वर्याश्च चिन्मात्रस्वभावत्वम् अ-

न्योन्यं विमलदर्पणपञ्चकवत् स्वत्र एकस्वभाव-
मेव, किं तु छायामात्रकृतभूमिकाभिर्भिन्नभिन्न-
मिव भासते, वस्तुतस्तु परतरायां चिद्भुवि तथा
स्वत्र शुद्धस्वरूपपञ्चके तथा बहिर्मरीचिप्रसरे
च त्रिष्वपि स्थानेषु एकं शुद्धं चिन्मात्रस्वरूप-
मेव परामृश्यमानमैक्यपर्यवसायि स्थितम्,
तस्या वामेश्वर्याश्च प्रथमो ज्ञानशक्तिप्रसरोऽपर-
क्रियाशक्तिगर्भो बुद्धीद्रियविवृत्त्या मुण्डक्रमेण,
द्वितीयश्च ज्ञानशक्तिगर्भः क्रियाशक्तिप्रसरः क-
र्मेन्द्रियविवृत्त्या दण्डक्रमेण निजनिजविषयान्
आत्मसात्कृत्य विलसति ॥ २ ॥

एतदेव वितत्य युगलकेनाह

प्रथमोफन्दु शिवा वामेशर
खेचर करनचक्र-विकसिय ।
विषयुविषयुभजवाञीभूचर
भुञ्जेतगासकमजरहिय ॥ ३ ॥

---

दोधाविचपलरौद्रेशर

निष्कलसकलपिशिआकारु ।

अक्केनचिद्पसरेपरमेशर

वायसनयनजञीअविकारु ॥ ४ ॥

( युगलम् )

प्रथमस्पन्दो यः परतरचिद्रूपात् देवीरूपात् सा वामेश्वरी इति, ततो घनीभूतः स कल्लोलतामाप्तः करणेषु द्वारेषु पतितः खेचरीशब्दव्यपदेश्यः, ततोऽपि स्थूलतया कृतपादप्रसारिको विषयं विषयं भजन् भूचरीशब्दव्यपदेश्यो भवति इति । तत्र च स्थानभेदेन विषयं विषयमात्मसात्कृत्य अनन्तर्बहीरूपभावेन मध्यमां भूमिमवाप्तः संहारभक्षिणीव्यपदेश्यो भवति, अन्तर्बहिः स्थानस्पर्शेन तु लोकयात्रां पारयन् रौद्रेश्वरीति निष्कलसकलाकारस्पर्शेन निरूप्यते । वस्तुतस्तु एकेन चित्प्रसरेण परमेश्वरी वायसाक्षिवत् चित्सत्तामात्ररूपतामुत्पत्तिभूमिं

प्रसरभूमिकां विषयस्वरूपं च, इति – तिस्रोऽपि भूमिका अविकृतेनैव रूपेण स्पृशति ॥ ३–४ ॥

तदेवाह

उदयुकरिपीठानपविष्टी
भुञ्जिचरुविश्रामगाहेय ।
दत्तपद अन्तरबहिदिष्टी
परओघे देवत अकमेय ॥ ५ ॥

एवम् उदिता स्थानप्राप्ता विषयावेशवती ग्रस्तभावा विश्वाकारापि एकतामाप्ता, इति – उक्तगत्या आदिदेवी पञ्चधा भेदेन विवृत्ता अखण्डेनापि स्वेन आस्थानेन वपुषा निष्कलेन सकलेन च विषयपतितेन ग्रसिष्णुना अन्तःप्रविष्टेन च अकारेण वायसाक्षिवदन्तर्बहिर्व्याका द्योतते – इत्युक्तमपि परिगणितम् (१) आदिदेवीधाम्नः परास्थानादूर्मिरेकोदिता अन्तरिन्द्रियवृत्तिनाडिषु विभक्ता इच्छात्वमाप्ता, तत्क्रमेण द्वादशसु इन्द्रियवृत्तिस्थानेषु पतिता

सृष्टिः खेचरी ( २ ) अनन्तरं स्वं विषयमवगाहमाना विषयावेशेन भूचरीस्थितिस्वभावा (३) तदनु विषयं संहृत्य प्रत्यावृत्तमात्रप्रकृतिश्चतुर्थी संहारभक्षिणी संहृतिस्वभावा ( ४ ) ततोऽपि आत्मसात्कृतविषयच्छायासंस्कारमात्रेणापि अस्थितविषयवासना शुद्धा, भाविविषया तु स्पर्शं चाप्राप्ता अनन्तर्बहीरूपापि बहिरन्तर्व्यापिका लोकयात्रां पारयन्ती नानारूपा सैव पञ्चमी घोरा रौद्रेश्वरी इति परओघेन गुरुक्रमेण एकैका स्वेन आत्मीयेन रूपेण अभिमता देवता विवर्तमाना मन्तव्या। अथ वाहक्रमव्याप्तिः – यत्र विश्रान्त्या धामव्याप्तिः कुलपद्मनाम्नः तत्र्यश्रस्य मध्ये प्रथमदेव्या व्याप्तिः, वामस्थकोणे चतुर्थदेव्या व्याप्तिः, पुनरपि प्रत्यावृत्त्या मध्यस्थाने पञ्चमदेव्या रौद्रेश्या व्याप्तिः, स चात्र त्र्यश्रोऽस्वरस्य शिरोदेशः, इत्थं वामेश्वरीभिरस्वरव्याप्त्या वर्णक्रमोऽधिष्ठीयते। इदानीं संवित्क्रमः – आद्यस्पन्देन प्रथमा देवी

इन्द्रियमार्गगता, द्वितीया विषयभूमिपतिता, तृतीया तद्विषयानात्मसात्कृत्य प्रत्यावृत्ता, चतुर्थी पुनर्मूलभूमिस्पृष्टा बहिरपि अव्यक्तप्रसरा ·······का पञ्चमी, इति – दण्डमुण्डक्रमेण संवित्क्रमः । अथ आसामेव निरावरणधामक्रमः – नानासंविद्रूपाणि व्योमनि वमति सृजति या···················चिद्रूपा सा व्योमवामेश्वरी, खे स्वभावगगने चरति या सैवं परस्वरूपा खेचरी, परविमर्शभूमौ चरति या सा भूचरी, एतच्च सर्वं स्फुरितं या संहरति सा संहारभक्षिणी, आदौ नि······· [रूपिते] व्योमवामेश्वरीरूपे महाव्योम्नि तन्मयतां याता सा रौद्रीश्वरी, इति निरावरणधामक्रमः । सौरधामप्रवणो हि खेचरीप्रसरः, चान्द्रधामप्रसरश्च भूचरीप्रसरः, वह्निधामप्रसरश्च संहारभक्षिणीप्रसरः, समस्तधाम्नामधिष्ठातारौ आद्यन्तदेवीप्रसरौ, इति – धामक्रमः ॥ ५ ॥

इत्येवं वामेशीस्वरूपे निरूपिते किमिमा गुरुत्वेन विभाव्यन्ते, उत देवतात्वेन? इति विचारयितुं युगलकेन आह ॥

पिदआदिदेवमयपञ्चकुसावेह
तथक्रमविशेषपञ्चकअनुरूप ।
पञ्चवाहुयिदगुरुतिभावेह
तेवतानकुयञ्जुसुरूप ॥ ६ ॥

---

.........................
......................... ।
द्युगुरुमन्त्रआपपरमाथे
अकुयबहुभेदेवन्पूजि ॥ ७ ॥

( युगलकम् )

आदिदेवीस्वरूपं निर्विशेषमेव, यदि वामेश्वरीस्वरूपं निश्चितं किमन्यदुपेयदेवतारूपेण पूज्यते, तदेवं सति भाविक्रमार्थस्वरूपमस्यैव

प्रपञ्चः – इति युक्तम्, यदि तूपायभूतगुरुक्रम-
स्वरूपतैव अस्य वामेशीपञ्चकस्य प्रतिज्ञायते
तद्देवतानाम् एतत्स्वरूपातिरिक्तं किमन्यद्विल-
क्षणमुपेयभूतं रूपं यदनेन गुरुपञ्चकरूपेण उपे-
येन उपेयते? इति चोद्यस्य प्रतिसमाधानम् –
देव········ स्वात्म········ वस्तुत ऐक्यमादि-
पीठादिष्टश्रीनाथस्तु देवगुरुभागव्यवस्थामेक-
स्यैव अखण्डचित्स्वरूपस्य यदादिदेश तत्सर्वै-
स्तथैव अभिवन्द्य उपास्यते इति ॥ ६–७ ॥

...............................................

...............................................

...............................................

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
पञ्चम उदयः ॥ ५ ॥

## अथ षष्ठ उदयः ।

अथ आसामेव वामेशीनां मुण्डदण्डक्रमेण इदम् अभिधाय उत्तरेण क्रमेण अपूजनपात-क्रममाह

शिवपद शत्तिपद्यु अनुभावे
ज्ञानक्रिया अक्षचिशा साथु ।
उदितु चिदानन्द्युसञ्भावे
तञ्युक्षाङ्गनानगउपरिशपदाथु ॥ १ ॥

---

नाडिशण्डचौरदिशाथम्पि
व्यापिनपरिदण्डभूमान ।
नासिमूलचतुष्पथजम्पि
तत्याद्दक्श्रुतिरसगोनान ॥ २ ॥

---

बारोठेदेवन्देभावेत
विषयचिदाचञ्वेतचप्पोह ।

पातकमिकमुअकमिपावेत
अक्षचिशु भैरु तप्पोह ॥ ३ ॥

(तिलकम्)

पूर्वं पूजनप्रतिष्ठितः पञ्चवाहक्रमो वितत्य चर्चितः, पातक्रमस्तु आन्तरः पूजनवर्जितः शक्तिचारसंचाररूपो रहस्यभूत इदानीं प्रतिपाद्यते, इह हि – मूलाधारजन्माधाराभ्यां पर्यायक्रमेण अक्रमेण वा उदितः परः शाक्तप्रवाहः पवनाधारं प्राप्य स्फुटीभावेन पञ्चधा उदयोन्मुखो लक्ष्यते, कन्दादिपरिसरं प्राप्य च ततः पञ्चकात् स्पर्शमरीचिप्रसरे स्वभावेन पतितोऽणुशो रोमकूपेषु पतितः पारिशेष्याच्च चतुर्धा अक्षजत्विषां सार्थः पोस्फुरीति, स च संभूय नाडिषण्डरूपतया स्थितिं भजन् मरीचिप्रसरः शक्तिदण्डे समं प्रपतन् भ्रुवोरारम्भकोटिं नासामूलं स्पृशति, तत्रैव बुद्ध्यक्षचतुष्टयस्य द्वारभूते चतुष्पथरूपे प्रसरति, तस्माच्च प्रदेशात्

द्विद्विरूपेषु चतुर्षु दृक्श्रुतिरसनाघ्राणाख्येन्द्रियद्वाराग्रेषु झम्पयानुपतन् तत्क्रमेण बहिर्विषयचर्वणां कृत्वा पातक्रमाक्रमाभ्याम् अक्षमरीचिभिराश्लिष्यमाणो भैरवस्तर्प्यते । पातरहस्ये इदानीं अयमेवार्थः पदार्थवाक्यार्थक्रमेण योज्यते, शैवपदात् मूलाधारात् तथा शाक्तपदात् जन्माधारात् मरीचिविशेषा ये उत्पद्यन्ते ते पवनाधारं प्राप्य स्फुटीभवन्तः कन्दे नाभौ स्पर्शप्रसरं सर्वतोऽणुशः क्षरन्तः, इति – चतुष्ट्वेन अवशिष्यन्ते, उद्यन्तस्तु प्रथमं शक्तिदण्डे पतन्ति इति प्रथमोऽयं चतसृणां बुद्धीन्द्रियमरीचीनां पातः, अनन्तरं नाडिषण्डवलनया दण्डाश्रयेण ऊर्ध्वं संघट्टस्थानं प्राप्य नासामूले भ्रुवोरारम्भस्थाने चतुष्पथस्थाने समम् एकप्रवाहेण द्वितीयपातं कृत्वा द्विधा द्विधा संनिविष्टाक्षद्वाराणि समाविश्य, यत्र नेत्रगोलकद्वयं श्रोत्रपात्रद्वयं रसनाप्रवाहद्वयं नासापुटद्वयं

च, इति – अक्षस्थानसंनिवेशनिविष्टाक्षजत्विषां सार्थस्तृतीयपाते अभिनिपत्य निजनिजविषयान् अधिष्ठाय सर्वतः समाश्लिष्टं भैरवं क्रमाक्रमाभ्यां तर्पयति, इति – चतुर्थपञ्चमभूमिकाद्वयावेशेन पञ्चधा क्रमोऽयं वृत्तान्तः। पातक्रमो हि नाथेन अपुष्पक्रमेण उपदिष्टः, स च इह एतत्प्रसङ्गात् साजात्येन चर्चितः। परमनभोऽधिष्ठितपरादेवीस्थानात् वामेश्यादिपञ्चकमुदितम्, यत्ततः पञ्चपातक्रमेण वृन्दाख्यप्रान्तचक्रे शांभवीदेवीचतुष्टये वामेशी प्रथमपातक्रमेणोल्लसिता शाक्तसिद्धाष्टकेन, खेचरी द्वितीयपातक्रमेण मेलापसिद्धाद्वादशकेन, भूचरी तृतीयपातक्रमेण चतुर्विंशतिमन्त्रसिद्धाक्रमेण, संहारभक्षिणी चतुर्थपातक्रमेण षोडशज्ञानसिद्धाक्रमेण, रौद्रेश्वरी पञ्चमपातक्रमेण, इति – पातक्रमस्य विभक्तः प्रसरः॥ १–२–३॥

अथ प्रकाशानन्दमूर्तिचक्रस्वरूपं युगलकेन प्रकाश्यते

रविनपकाशचक्कु भापूजि
आनन्दस चन्दा उप्पत्त ।
सत्तशिखादशनाडचुपूजि
जलनसूतसञ्जीसीवत्त ॥ ४ ॥

---

सिष्टिपकाशुनवीमतिचारे
थितिमयमनुआनन्दसभोगु ।
संहितिप्रतिघनेहंकारे
मानमेयमात्र्यु दिव्योगु ॥ ५ ॥

'अप्रकाशात् प्रकाशो भिन्न' इति प्रकाशवृत्तिर्नूतना सृष्टिरुच्यते, आमुखे पूज्यसंख्यासाम्यात् प्रकाश इति नामनिरुक्तगत्या अधिगतरविद्वादशकरूपतया त्रिषु त्रिधाममयत्वम्, इति रविः प्रकाशचक्रे तृप्यते आप्यायते, एवमेव आनन्दस्य चन्द्रादुत्पत्तिः 'कार्ये कारण-

मुपचरितम्' इत्यानन्दचक्रे षोडशकलाश्चन्द्र-धर्माः प्रतिपादिताः, मूर्तिचक्रे चानलधर्माः

'प्रभा मूर्तिः प्रकाशा च मरीचिस्तापनी तथा ।
कराला लेलिहाना च ....................... ॥'

इति शिखासप्तकेन व्याप्तवक्रगतसप्तशिखाभि-र्युक्तं बाहुनाडीदशकं च, इति — सप्तदशधा मूर्तिचक्रम् । एवं त्रयाणां क्रमाणां धामत्रया-त्मकत्वं गर्भीकृतं किंचिदेवोन्मीलितम्, तथा च — द्वादशमरीचिविषयः सौरो धामक्रमः ष-ण्ठस्वरवर्जिता द्वादश स्वराः वर्णक्रमः ता एव मरीचयोऽन्तः प्रथमोदिता निरावरणधामसु द्वादशसु शून्यमार्गेषु पतिताः संवित्क्रमः, इति — प्रकाशचक्रव्याप्तिः । आनन्दचक्रे बैन्दवामृत-नाडिषोडशकप्रसरेण धामक्रमः । षण्ठस्वरैः सह स्वरषोडशकव्याप्त्या वर्णक्रमः । बुद्धिक-र्माक्षमनस्सु षोडशसु संवित्क्रमः — इत्यानन्द-चक्रव्याप्तिः । मूर्तिचक्रे बाहुनाडिदशकोपस्कृ-तवक्ररश्मिसप्तकप्रसरेण सप्तदशधा धामक्रमः

आदिवर्णाधिष्ठिताकाराद्यः ककारपर्यन्तं सप्तदशधा प्रसृतो वर्णक्रमः। चान्द्र एव भूमिका बाह्यात् पराङ्मुखीभूता अन्तर्विमिश्रमिषवोऽप्यमया सहानुभूयमानाः सप्तदशैव – संवित्क्रमः, एतद्दिव्यौघरूपं चक्रत्रयम्। समस्तो हि पदार्थसार्थो धामवर्णसंवित्क्रमतां नातिक्रामति, यतो नामरूपमयं विश्वं, विश्वान्तःपाती पदार्थसार्थो नामरूपमय एव, नामरूपे धामवर्णौ पर्यायतामुपगच्छतः, इति – सर्वे पदार्था धामवर्णमयतां नोज्झन्ति, संविदालम्बनत्वेन विश्वं सत्तां प्रतिलभते, विश्वान्तःपाती पदार्थवर्गः सर्वथा संविदालम्बनः सन् सुस्थितो भवति, इति – धामवर्णसंवित्क्रमान्तःपातिनः सर्वे भावा, इति सिद्धम्। पञ्चवाहे प्रथमे वामेशीचक्रे सर्वे वर्णसंविद्धामक्रमा अविभागेन मयूराण्डरसवत् पिण्डिताः स्थिताः ततः प्रकाशानन्दमूर्तिक्रमेण किंचिद्विभज्य उन्मीलिताः। स्फुटो विभागस्तु – वृन्दक्रमो वर्णक्रमस्य महाक्रमः संवित्क्रमस्य

भासां क्रमो धामक्रमस्य दृश्यते, इति वक्ष्यमाणवाक्यार्थव्यवस्थाप्या एष्वेव प्रकाशानन्दमूर्तिचक्रेषु सृष्टिस्थितिसंहारव्याप्तयः इत्थं सूचिताः । ननु कथं रविव्याप्ता सृष्टिरिन्दुव्याप्ता स्थितिः, इति विपर्यय इव लक्ष्यते, यतः – सृष्टिरैन्दवी स्थितिश्च सौरी, इति संप्रदायपारम्पर्यम्? सत्यं – उदयक्रमे अयं वृत्तान्तः, विलापनक्रमेण चान्यदपि दृश्यते, इति – संप्रदायभेदेन व्याख्यानविशेषः स्थाने स्थाने दृश्यते, तथा च अर्कप्रकाशेन ह्यग्निः प्रकाश्यते । यच्छ्रुतिः

'सूर्यो वा इन्द्रः सोऽग्निं नक्तं प्रविशति ।'

इति । तथा

'गर्भिण्या वाचा मिथुनया प्रजनयति ।'

इति च । ननु कन्दगतमनलज्योतिः कुले सहजमस्ति, सौरादि च तेजो लाक्षणिकमारोपितम्? सत्यं – तदपि चित्प्रकाशेन प्रकाश्य-

मानं सता सत्तां प्रतिलभते, अन्यथा तु अस्थि-तकल्पं भवति, तथा इन्दुगतस्यापि प्रकाशस्य सूर्य एव कारणम्, यतः

'अमा नाम रवे रश्मिर्यस्यां वसति चन्द्रमाः।
अमायां वसते यस्मादमावस्या त्वतः स्मृता ॥

तथा

'सलिलमये शशिनि रवे-
दीधितयो निपतितास्तमो नैशम् ।
क्षपयन्ति दर्पणोदर-
गमिता इव मन्दिरस्यान्तः ॥'

इति सोमस्य सूर्याप्यायेन रश्मिवत्त्वम् । यच्छ्रीसाम्बः

'यस्मिन्सोमः सुरपितृनरैरन्वहं पीयमानः
क्षीणः क्षीणः प्रविशति यतो वर्धते चापि भूयः ।
यस्मिन्वेदा मधुनि सरघाकारवद्भान्ति चाग्रे
तच्चण्डांशोरमृतममितं मण्डलस्थं प्रपद्ये ॥'

इत्यस्तौषीत्, इति – सोमवह्न्योः प्रकाशकोऽर्कः, स च प्रथमनिर्देशयोग्यः । एवं प्रकाशवाचो-

युक्त्या प्रकाशकृत्सूर्यः प्रकाशस्वभावः प्रकाशा-
नुयातश्च, विमर्शश्चान्द्रः प्रसरः आनन्दचक्रम्,
तदनु ज्ञानव्याप्तो वह्निः मूर्तिचक्रगतः स्थाने
स्थाने भविष्यति, तथा शिवशक्तिनरव्यवहारे
शिवव्याप्तः प्रकाशो रविः, शक्तिव्याप्तो विमर्शी
इन्दुः, एवं शिवविद्यास्वरूपव्यवहारे शिवः
प्रकाशः सूर्यः, विद्या चानन्दश्चन्द्रः। एवमिच्छा-
ज्ञानक्रमः, अन्ततो ज्ञानविकल्पयोरुत्पत्तौ ज्ञा-
नस्य पूर्वसिद्धस्य प्रकाशपर्यायस्य विकल्प-
श्चान्द्रः प्रसरः सर्वथानुयायी भवति, सौरप्रका-
शानुषक्तः पश्चाद्भावी चान्द्र आनन्दप्रसरः।
प्राणो हि सूर्यः, अपानश्चन्द्रमाः, दिनं सूर्यो,
रात्रिश्चेन्दुः, पिङ्गला सूर्यः, इडा चन्द्रमाः, इति –
पूर्वनिर्दिष्टः सर्वथा सूर्य एव सूर्यप्रसरमनुरुणद्धि,
अवतारानन्तरं च स्थितिराप्यायः, अवतीर्णो हि
स्थितिमानन्तरं कार्यकृद्भवति, क्रिया हि तृती-
यकक्ष्यानिक्षिप्ता संहाररूपा वह्निव्याप्त्या मूर्ति-

चक्रगता स्वयं पर्यवस्यति, इति – सृष्टिरूपं प्रथमतः प्रकाशचक्रमेव भवितुमर्हति । इत्थं पूजाक्रमं पारम्पर्येण अनुरुन्धानाः सर्वे मुखसंप्रदायाः यथा व्यवस्थाप्यमानास्तथा तथा प्रतिष्ठां लभन्ते, संख्याभेदनियमपूजनक्रमश्च सर्वप्रकारमपरिहार्यः, इति समर्थितमेतत् ॥४॥५॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
षष्ठ उदयः ॥ ६ ॥

---

अथ सप्तम उदयः ।

अथ वृन्दक्रममुपक्रमते

शाकिनपीठ चक्क अकनायक
उत्तरगर सिंहासनसारु ।
भावेत मङ्गल ममतागालक
नमसा विन्दुचक्कआचारु ॥ १ ॥

वृन्दचक्राचारं नमस्यामि, इत्यन्वयः । आ-

चारो हि क्रियास्वभावो नीरूपः आचारकर्तारं द्रव्यरूपमाक्षिपति, इति–शाकिनीनां नमस्कारः पर्यवस्यति इति। कोऽसावाचार? इत्युच्यते–आदौ भगवतीं प्राधान्यात् प्रणम्य ततश्चक्रपञ्चकनिविष्टा देवताः पूज्यन्ते, इत्ययं–महौघः, तदनु सिद्धौघे भगवत्याः पूजनम् इति–पक्षद्वयस्पर्शी आचारः, किं कृत्वा? इत्यत आह–तामेव ममताप्रत्यस्तमयहेतुं श्रीमङ्गलां भावयित्वा, तां विशिनष्टि 'शाकिन' इति, अष्टकुलोद्भूतपञ्चविधशाकिनीचक्रे इयमेकैव नायिका उत्तरगृहे सिंहासनस्य प्रधानत्वेन अधिष्ठात्री, इति पृथग्भावेन नुता। अथास्या एव धामवर्णसंवित्क्रमः–धामवर्णक्रमौ हि वाच्यवाचकभावेन शब्दार्थगत्या नामरूपविवर्तरूपौ विश्वव्यापकौ सर्वत्रापरिहार्यौ, तयोश्च प्रमेयरूपयोर्द्वयोरधिष्ठाता तृतीयः प्रमातृरूपः संवित्क्रमः, संवित्क्रमेण विना धामवर्णक्रमौ स्थितावपि अस्थितकल्पौ, तौ हि जडत्वात्

सर्वथा संवित्क्रमेण व्यवस्थाप्येते, इति – सर्वत्र धामवर्णसंविदां क्रमः प्रशस्यतरश्च अपरिहार्यश्च, तस्य च संवित्क्रमः स्रष्टा धर्ता व्यवस्थापयिता व्यापकः संहर्ता विश्रामस्थानम् इत्येतावति वस्तुतत्त्वं समाप्तिमाप्तम्, चित्परिस्पन्दरूपमध्यमधाममङ्गलादेव्या धामक्रमः, पञ्चपिण्डवाच्यता इति तस्या वर्णक्रमः, चिच्चक्रास्पदं निरुपाधिः संवित् तस्याः प्रतिष्ठास्थानम्, इति – संवित्क्रमः, अनन्तरं निरावरणपरमाकाशरूपा च, इति – निरावरणधामक्रमः ॥१॥

अथ महौघो गुरुक्रमः, स च वृन्दक्रमः क्रमसद्भावे हि सविस्तरमुपदिष्टः, स इह अतिदेशेन यथास्थितोपदेशपारम्पर्येण प्रस्तूयते

पञ्चमुदुवलितो परिसङ्गिन
वृन्दिवामेशीसंचारु ।
ज्ञानसिद्धरौद्रेशकरङ्गिन
परिपाटी अविभिन्न पकारु ॥ २ ॥

पञ्चमुद्रावलितं परिसंख्याहि – परिगणय इत्यर्थः, कथम्? इत्याह 'ज्ञानसिद्धेति' ज्ञानसिद्धा – रौद्रेश्वरी करङ्किणीति, मन्त्रसिद्धा – ग्रासकी क्रोधनीति, मेलापसिद्धा – भूचरी भैरवीति, शाक्तसिद्धा – खेचरी लेलिहानेति, शांभवसिद्धा – वामेश्वरी खेचरीमुद्रा, इति – परिपाट्या गणनम्। पाञ्चभौतिकं शरीरं परमाकाशे या विश्रामयति, सा करङ्किणी – इति ज्ञानसिद्धानां मुद्रा। चतुर्विंशतितात्त्विकं मात्रे वपुषि या क्रोडीकरोति सा क्रोधनी – इति मन्त्रसिद्धानां मुद्रा। खेषु सदा चरति या, सा खेचरी इति – शांभवसिद्धानां मुद्रा ॥ २ ॥

षोडश ज्ञानराव मन्त्रचमे
चुवीहि बाहि मेलापु।
उदयु अष्टशश्वीशम्भुकमे
गासदेवी चौरदेवी न कलापु ॥३॥

पञ्चानां वृन्ददेवीभेदानामुद्देशवाक्यमिदम्,

इति 'पञ्चमुद्रेति' 'षोडश ञानरावेति' च द्वाभ्यां शाकिनीचक्रपीठिकाबन्धः । अत्र चेयमनुक्रमणी, – 'भ्रितकेति' 'ञानरूपेति' च द्वाभ्यां ज्ञानसिद्धास्वरूपोपदेशः । 'बिन्दुशिरि' इत्येकेन मन्त्रसिद्धास्वरूपोपदेशः । 'ह्रस्वदीघ' इति 'परिणमन्द' इति 'अकुचिद' इति च त्रिभिर्मेलापसिद्धास्वरूपोपदेशः । 'सत्तम अष्टम' इति 'अक्यापीठ' इति 'कुलपम्मा' इति 'चन्दाने' इति 'अमकल' इति च पञ्चभिः शाक्तसिद्धास्वरूपोपदेशः । 'अस्सरु' इति 'ञानकिया' इति च द्वाभ्यां शांभवसिद्धास्वरूपोपदेशः । 'वामेश्यु' इति 'अष्टपीठ' इति 'आदिवन्न' इति 'मातृक' इति चतुर्भिश्च वृन्दस्वरूपनिर्णयः – इति सप्तदश, प्राच्यैस्त्रिभिः सह विंशतिर्वाक्यार्थः संपन्नः ॥ ३ ॥

एतदेव पृथग्वाक्यार्थैर्योजयाति

भ्रितकमिस्त्रसूतक रावु रवि
मुण्डरावु ओन ञानु सदाय ।

ओनरावे क्षन क्षन उदयु रवि
षोडश सर देवी नस दाय ॥ ४ ॥

मृतकसूतकौ—अन्यत्र शिवशक्ती प्राणापानौ शक्तेरुदयप्रवेशौ पिङ्गलेडामार्गौ नादबिन्दू ह्रस्वदीर्घौ, इह तु सूतकः प्लुत इति मिश्रस्य दीर्घता इति मृतकैर्ह्रस्वरावैः पञ्चभिः, मिश्रैर्दीर्घरावैः पञ्चभिः, सूतकैः प्लुतरावैः पञ्चभिः, इति—पञ्चदशभिः रावैर्मुण्डरावः षोडशः । आद्यर्ण एव कोटिद्वयस्पर्शी चान्द्रीणां कलानां क्रमशो द्रावणाय रौति स षोडशः, इति—षोडशधा रावोदयो ज्ञानमार्गः, तासां च रावोदयः क्षीणोऽपि क्षणे क्षणे मदेन सहजेन शाक्तदर्पेण स्वरदेवीनां घण्टानिनादवत् नवनवीभवति यतः ॥ ४ ॥

तदेवाह

ज्ञानरूपु आधारु पभावे
अस्सरुअन्तु यावउच्चारु ।

त्रिपंचु·········अन्तु अभावे
परिपूरेतशून्यि उपहारु ॥ ५ ॥

आधारोऽयं शिरोरूपः, प्रभावेण – निजदीप्ति-विशेषेण ज्ञानेन, यत्र अपरेण बुद्धीन्द्रियजेन, तथा वैन्दवेन परेण, करन्ध्राश्रयेण परतरेण च – इति त्रिविधेन ज्ञानमय एवाधारः, यदागमः

'परं पदं पश्यति मूर्धरन्ध्रे ।'

इति । तथा

'विन्दुमध्यगतो योगी सर्वं जानाति सर्वदा ।'

इति । अक्षजं च सर्वगम्यमपरं, तत्र त्रिविधेऽपि ज्ञाने आदिवर्ण एवाविभक्तः षोडशस्वरतया विवृत्तः सहजेन स्वभावेन स्वरभेदजेन बीज-भावेन व्यापको भवति, उद्धारे षोडशात्मके स एव विवर्तते, स एव बुद्धिकर्माक्षैर्विषयैश्च मनसा सह षोडशीभावे तावत्संख्यैन्दवकला-पूर्णो भूत्वा सप्तदशैककल्पनाशून्ये निरुपाधौ

धाम्नि उपहारीभवति – सर्वाङ्गीनं सामरस्यमा-
पद्यते ॥ ५ ॥

अथ मन्त्रसिद्धास्वरूपम्

बिन्दुशिरिभूषणु अकरन्धि
मञ्युतत्त्वगनन अनुमूह ।
मन्त्ररावकादी मुखरन्धि
पुर्यष्टकत्रितये चुवीह ॥ ६ ॥

कादयो भान्ताश्चतुर्विंशतिवर्णत्वात् कथं म-
न्त्रत्वमापद्यन्ते? इति शंकानिरासाय संप्रदायः –
बिन्दुना चेच्छिरसि न्यासेन अलङ्कृतास्तदा
मन्त्रत्वेन आभाष्यन्ते, इति सबिन्दुकानां कादि-
भान्तयोनीनामुदानमार्गेण उच्चारितानां मन्त्र-
त्वापत्तिः, तैर्मन्त्रैरेव तत्त्वगणना पृथिव्यादिप्रकृ-
त्यन्ता अनुमिता, अतश्च चतुर्विंशतिरेव अशु-
द्धानि तत्त्वानि तासां शाकिनीनां सिद्धानि
भवन्ति इति । अनुमानं तत्त्वसिद्धिः ते च मन्त्र-
रावाः दण्डरावीभावेऽपि मुखरन्ध्रे एव व्यज्यन्ते,

इति दण्डरावोऽपि मुण्डरावपर्यवसायी एव भवति, यतो – रावोपशान्तावेव पुर्यष्टकत्रयस्याप्युपशम इति मन्त्रसिद्धाः ॥ ६ ॥

अथ मेलापसिद्धाः

ह्रस्वदीघ हलअच हलसञ्जी
पकिति इकारादी यादीन ।
द्वादशमेले मात्र्यु रञ्जी
योनिबीज अस्सर आधीन ॥ ७॥

वक्ष्यमाणवाक्याभ्यां सह वाक्यत्रयेण मेलापसिद्धानां मेलापो द्वादशधा यत्र मातृकावर्णानामुच्चरतामेकरूपक्रमे च अष्टप्रकारः सन्धिरूपो मेलापः, तथा संविद्धामरूपश्चतुर्धा इति, तद्यथा – ह्रस्वदीर्घयोर्मेलापः शिव आयतनम् शिवायतनम् दीर्घरूप एव आदेशः, हलामचां च 'परः सन्निकर्षः संहिता' इति सन्धिरूपो मेलापः भगवान् अयं भगवानयम् इति द्वितीयः, हलामेव पूर्वापराणां सन्धिः भगवान् जगत्प्रभुः

भगवाञ्जगत्प्रभुः इत्ययं हलसञ्ञीति तृतीयः, अथ 'पकिति'—इति प्रकृतिभावः अविवृत्तोऽपि विवृत्तः स्वरयोः प्रकृतिभावरूपः यथा — अ अपीहि इ इन्द्रं पश्य इति चतुर्थः, प्रकृतिभूतानामिकारादीनां यकारादिभिर्विकृतिभिः 'इको यणचि' इति स्थान्यादेशलक्षणः सन्धिर्मेलापः पश्याम्यत्र इत्यादिः, अत्र च इकारादयश्चत्वारोऽन्तस्थाक्षररूपेण सन्धौ विवर्तन्ते, पुनश्च पदावस्थायां प्राग्रूपेण अवतिष्ठन्ते इति प्रकृष्टः परिणामः पञ्चमः। अन्यश्च एकस्याः ककारादियोनेः स्वरान्तरसंयोजनवियोजनारूपः षण्ठस्वरवर्जितद्वादशमातृणां व्याप्त्या क का कि की इत्यादि, तथा हलामेव संयोगाक्षराणां पूर्ववत् कादीनां योनीनां क्क क्न क्म क्ढ क्य क्ल क्त क्स क्ब क्प क्र क्षकारान्तानामेव द्वादशानां यमलीभूतद्वादशमात्राव्याप्त्या सन्धिसंयोगरूपो मेलापः षष्ठः। तथा अस्वरेण अकारेण पञ्चदशानां बीजानां अःकारपर्यन्तानां तथा योनीनां

ककारादिक्षान्तचतुस्त्रिंशताम् — इत्युभयत ए-
कोनपञ्चाशतां गर्भीभावेन अन्तरधिष्ठानेन सर्व-
व्यापकत्वेन क ख ग घ ङ इत्यादिमातृकोच्चा-
ररूपः सयोनिबीजानामस्वराधीनः सप्तमः ॥७॥

अथ संप्रसारणरूपं स्थान्यादेशलक्षणं मेला-
पमाह

परिणमन्दयादी इग्भावे
थानीसआदेशुयपरसूत ।
शत्तशिवि व्यञ्जनमनभावे
सम्प्रसरे गौरयमहभूत ॥ ८ ॥

यादयश्चत्वारोऽन्तस्थारूपा इकारादिचतुःस्व-
ररूपेण परिणमन्ति, स च स्थानिनामादेशरूपः
परिणामः प्रकृष्टः — प्राग्रूपप्रत्यापत्तेरभावात्, एवं
शक्तयो यकाराद्याः शिवे इकारादिरूपे योनयो
व्यञ्जनानि बीजभावेन संप्रसारणावस्थायां प-
रिणमन्ति — इति चत्वारि महाभूतानि विवर्तन्ते,
यथा इज्या गृह्यते उक्त इत्यादि — 'इग्यणः

संप्रसारणम्' इति परिभाषितत्वात् एवम्, इत्यष्टमो मेलापः ॥ ८ ॥

अथ संविद्धामक्रमेण मेलापः

अकुचिदसामरस्युअकलापे
बियुवाहनत्रोवह मेलापु ।
पतिविच्चीत्रियु विषमपलापे
अकुशाच्ची द्वादशगन्थि विलापु ॥ ९ ॥

एकं तावच्छिवशक्तिसामरस्यं प्रकाशविमर्शरूपेण सहजं सर्वव्यापकं, तदप्यकलापे – सर्वोपशान्तौ सत्याम्, अथ च अस्य आद्यक्षरस्य या कला औचित्यान्निरावरणा निष्कलास्ताभिः परं क्षणं निरावरणीभाव एव इत्येकः सदानुसन्धेयः, तस्मिन्सति द्वितीयश्च महासंहारः द्वादशमरीचीनां युगपत्त्रयोदशे प्रवेशलक्षणः, तृतीयश्च प्रतिपृथक्पृथक् निजविषयान् प्रति मेलापेन – तन्मयीभावेन, इति त्रिधा संवित्क-

मेण, अन्यश्चतुर्थः शक्तेरनलपवनवलनया मध्य-मार्गोदितायाः मायाख्यपाशवब्रह्मविष्णुरुद्रेश्वर-सदाशिवइन्धिकादीपिकाबैन्दवनादाख्यशक्ति-रूपग्रन्थिद्वादशकेन सह स्पर्शभेदसंख्यातेन धामक्रमेण मेलापो द्वादशः – इति वर्णसंवि-द्धाममयस्य शिवशक्तिमेलापवपुषो जगतः सम-वायात्मा मेलापः, इति मेलापसिद्धास्वरूपो-पदेशः ॥ ९ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
सप्तम उदयः ॥ ७ ॥

---

## अथ अष्टम उदयः ।

अथ शाक्तसिद्धास्वरूपोपदेशं पञ्चभिराह

सत्तम अष्टम वग्ग्यु याजी
शाजी चौरघोष महाघोष ।
शाता देवी भजनसमाजी
संह्रिति वन्न कमपरिपोष ॥ १ ॥

अकारान्ता भान्ता वर्णाः पूर्वं नियुक्ताः, मकारश्च स्पर्शत्वात्मना रूपेण संनिपत्योपकारी अन्तरङ्गः – इत्येकैकस्य रावरूपतायामवसाने बिन्दुरूपेण नियोजितः यतः प्राणस्य बीजभूतस्याकारस्य अपगमादस्वरो मकारः 'अनुस्वार' इत्युच्यते – इति पूर्ववृत्तान्तः, यादयश्च मेलापाङ्गत्वेन परिणामापरिणामरूपतया निरूपिताः, शादयश्च त्रयो वर्णा अघोषाः, हकारश्च महाघोषः, एवमेते यादयः शादयश्च वर्गद्वयस्थाः शाक्तीभिर्देवीभिर्व्याप्ताः, – इत्येतद्वर्णोपासया शाक्तधाम आसाद्यते, संहारवर्णश्च क्षकारः स्वतश्चतुष्कलत्वात् अन्यवर्णपोषणं नाभिलष्यति – इति शाक्तसिद्धानां वर्णक्रमः ॥ १ ॥

अथ आसामेव धामक्रमः

अक्यापीठाशाकिनपसरि
  अष्टिरूप्यु वपुदरि शेत ।

उदयु भजि ऊधिअध खसरि
थानथान विश्रमु परिशेत ॥ २ ॥
कुलपम्माकन्दानाभिसरा
ऊदवहाक्रुप्पदपरसिद्ध ।
सुमरसुवत्रतान अप्रसरा
बिन्दुशण्यु अधपसरसमिद्ध ॥
( युगलकम् )

एकपीठजा शाकिनी अष्टभी रूपैः श्रेष्ठसंख्यामापन्ना ऊर्ध्वाधोऽभ्यस्तस्थाने विश्राममाकारयति, तानि च स्थानान्यष्टौ यतो जन्माधारात् कन्दानलपरिसरात् नाभिनलिन्याश्चोर्ध्ववाही उदयोऽवसाने विश्राम्यति, हृत्कवाटान्तः तथा वक्रताल्वोः स्थितिरूप ऊर्ध्वाधोगतिनिरोधेन त्रयाणामन्तरूर्ध्वाधःप्रसरेण विश्रमः बिन्दुचक्रमूर्धचक्रयोश्च स्थितिं कृत्वा योऽपवेष्टनेन उदयः सोऽधोगतिसमृद्धः – अधोगत्या

कुलप्रवेशेन तदाप्यायनेन समृद्धिदः, परास्थाने विश्रामात् ॥ २ ॥

उक्तार्थमेव विभज्याह

चन्दाने लम्पिकरसपाने
अण्डविकासे विश्शम बिन्दु ।
नाभीपाचकशत्तिपमाने
मावासी रेत कन्दि बिन्दु ॥ ३ ॥

बिन्दौ यदा स्थितिः तदा ऊर्ध्वस्थचन्द्ररस-पानप्राप्तिर्भवति – इति शेषः, चान्द्रो धामप्र-काशः, अण्डविकासेन च विश्रमं विन्दस्व – इत्यसामान्यः सौरो धामप्रकाशविशेषः, नाभौ जाठरस्याग्नेः पाचकत्वमूष्मणः – समस्तकाय-व्याप्तावपि जाठरे एव हठपाकस्य संभवात् – इति बाह्यः, एवं त्रिधामक्रमः कन्दे समस्तबै-न्दवकलानां प्रत्यस्तमयः – इत्युक्तम् आमाव-स्येन धर्मेण, इति निवासधामक्रमः ॥ ३ ॥

संवित्क्रममाह

अमाकलामलेव्यानु परावेन
सेतुबन्धमार्गे पविशेत ।
अष्टि उदयु चन्दगलावेन
शाता कुलदेवी परिशेत ॥ ४ ॥

बिन्दोः कवाटतटाद्वा उत्थाय पश्चाद्भागस्थ-सेतुमार्गेण प्रविश्य परास्थाने विश्रमः, एवमष्टावपि उदिताः व्यानप्रसरस्थस्य सर्वतः कुलपिण्डस्य जीवनमन्त्यया अमया कलया व्याप्नुवन्ति, इत्यर्थः—इति शाक्तानां संवित्क्रमः, यतोऽष्टभिरप्युदयैश्चन्द्रस्यैव द्रावणं भवति, स च परतः कुलपिण्डस्यात्मनः परानन्दचमत्काराय पर्यवस्यति—इति शाक्तसिद्धास्वरूपम् ॥ ४ ॥

अथ शाम्भवसिद्धाः

अस्सरुजनभेद्युरङ्गीजि
रौद्रवामजेठ्युअम्बेत ।

चाकलु अन्त्यवन्नु सन्धीजि
शाम्भवपशमदशाखम्भेत ॥ ५ ॥

यथैव अस्वरः कलाभेदेन चतुर्धा संधीयते, रौद्र्यादिभिश्चतसृभिस्तथान्त्यवर्णः क्षकारः संहारार्णश्चतुष्कलः ककारषकाराकारविसर्जनीयैर्विभज्यते, कथम्? इत्याह — शाम्भवीः प्रशमदशाः स्कम्भित्वा विदार्य अन्तः प्रवेश्य, इति शाम्भवसिद्धानां वर्णक्रमः ॥ ५ ॥

अथ संवित्क्रमः

ञानकियारश्मीनविलापक
शिवशश्वीआपाकवलीत ।
आनन्दसअञबोधसगासक
एशाम्भवसिद्धाकवलुवलीत ॥ ६ ॥

ज्ञानक्रियाप्रसराणां द्वादशगतानां समं सर्वासामेकक्षणे एव विलापिका—इति बहुवचनसंख्यासामर्थ्याल्लक्षितम्, एकैकशो हि वृत्तिविलापः

सदा सर्वजनीन इति न योगाङ्गम्, एवं समूह्य विलापोक्तिरियम् – बाह्यविषयाणां विलापात्, तथा शिवशक्त्यात्मनां प्राणापानयोरात्मनश्च विकल्पविकल्प्यमानानामकल्पनेन अप्राणभूमौ प्रत्यस्तमयात्, तथा आनन्दस्य परस्य विमर्शस्य विलापनं बोधैकमात्रभूमिकायामावेश इत्यर्थः, अवसाने चतुर्थभूमिकायां च बोधस्यापि परस्य ग्रासः, एभिः कवलैश्चतुर्धा शाम्भवसिद्धाः सिद्धिभाजो भवन्ति, इति तासां संवित्क्रमः, 'प्रवेशश्च धामक्रम' इति शाम्भवसिद्धास्वरूपम्, एवं झटित्युद्घाटितचक्षुषः स्वलक्षणविषयम् यदालोचनाज्ञानं तज्ज्ञानसिद्धानां ज्ञानम्, 'इदमित्थं अनित्थं नानित्थं किन्त्वित्थम्' इति यः परामर्शः स एव मन्त्रसिद्धानां मन्त्रः, वेद्यवेदकसामरस्यं मेलापसिद्धानां मेलापः, मातृमानमेयानां विभागो यत्र चिद्धाम्नि गलति तदासादनरूपः शाक्तक्रमः शाक्तसिद्धानां विश्रामः, 'सोऽपि याति परे धाम्नि अस्तम्' इति

तच्छाम्भवसिद्धानां धाम, किंच ज्ञानसिद्धि-भाजो देवताज्ञानस्य पराकाष्ठाप्राप्त्या, मन्त्रसि-द्धिभाजश्च मन्त्रसिद्धेः पराकाष्ठाप्राप्त्या, मेलाप-सिद्धिभाजश्च मेलापफलविश्रान्तेः पराकाष्ठा-प्राप्त्या, शाक्तसिद्धाश्च शाक्तोदयस्य प्रान्तभू-मिकावलम्बनेन काष्ठाप्राप्तदशायां, शांभवसि-द्धाश्च अलंग्रासवृत्तिपर्यन्तभूमिकासंस्पर्शेन ए-कस्मिन्नेव धाम्नि सममेककालमेव विश्रान्तिम-नुत्तरामेव आपद्यन्ते ॥ ६ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे

अष्टम उदयः ॥ ८ ॥

---

## अथ नवम उदयः ।

अथ मकारदेवतायाः पञ्चषष्टितमतामपाक-र्तुमाह

वामेश्यु पञ्चवाहगुने
सिष्ट्याज्यु मूलापरिभोग ।

मङ्गलपञ्चहष्टकमेनगुने
सा अक्के पूजूजिभिन्नोघ ॥ १ ॥

उक्तवत् वामेश्वरीभिः पञ्चभिर्विभागेन अधिष्ठिता द्वादशवृत्तयः षष्टितामापद्यन्ते, मूलजाभिस्तु सृष्ट्यादिभिश्चतसृभिः सह चतुष्षष्टिर्भवन्ति, इति – मकारदेवी पञ्चषष्टितमा कथं तन्मध्ये भवति, सा हि महौघमतिक्रम्य भिन्ना सिद्धौघे पूज्यते ॥ १ ॥

अत्रैव पक्षान्तरमाह

अष्टपीठ अष्टव-अष्टगुने
अष्टाष्टे चुअष्टमहौघ ।
तोवेत पञ्चहष्टकमेनगुने
साआदिअन्तनायकसिद्धौघ ॥२॥

अष्टभ्यः पीठेभ्य एकैकस्मात् अष्टौ अष्टौ शाकिन्य, इति – चतुष्षष्टिरेव भवन्ति, तथापि मकारदेवी कथं पञ्चषष्टितमा भवति, यतः सा

शाकिनीचक्रस्यादिकोटिप्रान्तकोटिगतापि पृ-
थग्भूते सिद्धौघे एकैव पूज्यते, तस्याश्च मका-
रव्याप्तिः – इत्यसमीचीनम्, यतः मकारः पञ्च-
विंशतितमायां[म्यां] भूमिकायामुपपन्नः, इति
त्रयस्त्रिंशद्व्यञ्जनपाती कथमुच्चित्य मकारदेवीम-
नुधावति – इत्युक्तप्रायम्, वृन्दक्रमे च वर्णक्रः
मसंख्यासाम्येन वक्तुमवशिष्यते इति ॥ २ ॥

तं प्रकारान्तरेण युगलकेन आह

पंचदहि शिवशत्ति पकारे
हृस्वदीघ पलत्युयौराउ ।
सन्ध्यक्षर अष्टेदुगञारे
यमबिन्दाज्यु अष्टियथावु ॥ ३ ॥

---

ए अक्क बीहकाभ्युत्रे त्रीहि
सहिते चुहष्टक परिभावु ।

पलयवन्नज किशीयनिरीहि
पंचहष्टुमरुभूमुचावु ॥ ४ ॥
(युगलकम्)

आदिवर्ण एव सर्वत्र प्रसृतः, स च शिव-व्याप्त्या पञ्चभिर्ह्रस्वैः शक्तिव्याप्त्या पञ्चभिर्दीर्घैः प्लुतैश्च – इति पञ्चदश स्वराः, तथा सन्ध्यक्षराणि चत्वारि नित्यदीर्घत्वात् दीर्घप्लुतभेदेन अष्टौ भवन्ति, तथा यमैः कुं खुं गुं घुं इति चतुर्भिः तथा अनुस्वारविसर्जनीयजिह्वामूलीयोपध्मानी-यैश्चतुर्भिः, इति पराश्रयैरष्टभिः – इत्येकत्रिंश-त्स्वरजातीयाः, तथा च मातृकावर्गाः पञ्च पञ्च-गुणाः य-शवर्गौ चतुर्गुणौ – इति त्रयस्त्रिंशत्, उभयतश्चतुष्षष्टिः, एवमेताननतिक्रम्य पञ्चषष्टि-तमः प्रलयवर्णः संहारार्णः क्षकारः मरुभूमिम-नुच्चार्यामनाख्यां गलितप्रमातृप्रमाणप्रमेयां स-त्तामात्रानुभवगम्यां दशामनुप्रविष्टः, इति – वृन्दक्रमस्य प्रतिपदोक्तवर्णव्याप्तिः । इति वृन्द-क्रमे महौघः ॥ ३ ॥ ४ ॥

अथ सिद्धौघ-मानवौघ-शिष्यौघानाह

हरशिरुजिनगङ्गि अवतारन
ताजानु मङ्गल पीठदिशान ।
सा मानवौघ त्रिस्थान कुलारन
भानुपाद अष्टन शिष्यान ॥५॥

श्रीमङ्गलैव पीठदिशामवतारपात्रम्, यथा—हरशिरः स्वर्नद्याः, सा च सिद्धौघरूपा मानवौघनेत्रराज्ञी ह्रस्वनाथेति त्रिरूपस्य कुलारणिः—कुलस्य ओवल्लीविशेषस्य अरणिः, त्रयाणामग्नीनामिव उत्पत्तिस्थानम्, ततश्च मानवौघस्यान्ते शिष्यौघाग्रणीर्भानुपादः अष्टानां शिष्याणां प्रभुः, यन्मध्याद्राज्ञी ईशानाख्या स[म]दन्तं पारम्पर्यनिदानम् ॥ ५ ॥

तदेव प्रस्तौति

अष्टमूचीमहद्युयाखेत
व बम्मु पजापतीन निखिलान ।

अरुणोदयु दिङ्मण्डल ता खेत
भानु विकासक शिशुकमलान ॥६॥

यथा महादेवः अष्टानां मूर्तीनां विकासकः, ब्रह्मा वा तावतां प्रजापतीनाम्, अरुणोदयो वा तावतो दिङ्मण्डलस्य, तथैव भानुः – श्रीचक्र-भानुः शिष्यकमलानां विकासकः, इति ॥ ६ ॥

एनमेव आयातिक्रमेण गुरुक्रमं स्तौति

इतय ओवल्लीन परम्पर
दीपमाला जन अन्धाकार ।
धमित धाम उदयेत निरन्तर
दिशिशापायवतु अविकार ॥ ७ ॥

एतादृशी ओवल्लीनां परम्परा उदिता सती दृश्यते, सा च निर्विकारा उपायसरणिः, अन्ध-कारे दीपमालेव स्वपरप्रकाशिका द्योतते, इति– सिद्धौघ - मानवौघ-शिष्यौघाः ॥ ७ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
नवम उदयः ॥ ९ ॥

## अथ दशम उदयः ।

अथ महाक्रमस्य अवतरणिका

अवतारेनस महक्कमपूजनु
इमभजगुरुक्कमपायाय ।
समयपतितु वोतु तथ सूचनु
रायसपत्तयाखेतरानाय ॥ १ ॥

तदिदं महाक्रमस्य परिकरतामात्तम् उपदिष्टम्, इदानीं तस्य समयपतितं सूचनं प्राप्तम्, यथा — राजपरिकरालोकनेन राजदर्शनप्रतीतिः ॥ १ ॥

अथ कथनपूजनसंक्रमाणामन्योन्यानुप्राणनेन निरूपणामाह

वाचक वाच्य ज्ञानचि ठ्विच्ची
अक्केसज्जे अन्तरदिश कित्त ।
कथन पूजन सङ्क्रमन्यि विच्ची
भावी वन्न धाम संवित्त ॥ २ ॥

शब्दार्थबोधाः परचिद्भित्त्यन्ताः स्फुरन्तोऽपि प्रत्येकस्य द्वौ द्वावन्तर्दशयाधिष्ठानं विधत्तः इति – त्रयोऽपि त्रिस्वरूपाः स्वरूपेण प्रथन्ते, यथा कथनपूजनसंक्रमणानि तादृशा वृत्त्या तेन नेन संनिवेशेन अन्योन्यमनुप्राणितान्येव दृश्यन्ते, तदित्थम् – वर्णधामसंविदां कथनपूजनसंक्रमणानां सर्वथा परस्परमन्तर्भावो विभावनीयः, एकं हि तद्वस्तुतत्त्वं त्रिधा प्रस्तावितम् ॥ २॥

अथ चक्रक्रमोद्देशमाह

अकमुअखण्डित- बोध-निधाने
आकस्मिकुकम्मु उब्भावेन ।
अन्दर बहि कुलकौल विधाने
सोये पूजनान पावेन ॥ ३ ॥

अक्रमाखण्डितस्वभावेन चेतनचिन्तारत्नेन अकस्मात्स्वात्मन्यननुसंधानेन स्वाभिन्नोद्भावितभूमिकाविशेषेण, तदनु कुलभूमौ परावा-

क्रप्रभावतो जन्मस्थनाडिचक्रादिकरन्ध्रस्थशा-न्तचक्रान्तचक्राक्रमेण, इति – उभयथा यः पर-मेशो दिव्यौघे अनुभूय आविर्भावितः, स एव आदिनाथशरीरमाविश्य बहिः कुलकौलभूमौ चक्रक्रमेणैव पूज्यत्वेन परिभाषितः। इत्थं सर्वत्र कुलदर्शनेषु शाक्तो योऽन्तःक्रमेण उदयः स्थितः स एव तत्तद्भूमिकानुभवविशेषैः चक्रचरीरूप-मास्थितैः संस्थानविशेषेण पूजितैः स्वरूपप्रथो-न्मीलनाय चर्याक्रमेणापि क्रमार्थ उपासि-तव्यः, तथा चागमः

'यस्मिन्यस्मिंश्चक्रवरे तत्स्पर्शाह्लादनिर्वृतिः।
तदवष्टम्भयोगो यः सैव पूजा विधीयते ॥'

इत्याशयेन पूर्वसिद्धानामभिप्रायः ॥ ३ ॥

अथ महाक्रममाह

इच्छादी सिष्ट्यादी शची
योनी पञ्च परा गाहेत ।

सिष्टि समरसो वन्युयची
कमु चव्वेन अवतारुपिशेत ॥४॥

इच्छाद्याः स्रष्ट्याद्याः शक्तयस्ता एव पराः पञ्च योनयः सृष्टिप्रसरान्यावतः अवगाह्य आविश्य षड्भिर्वर्णैरवतारं सृष्ट्वा क्रमं चर्वयन्ति, यतः क्रमेण तन्मात्रशक्तयः पञ्च तावतीभिर्मरीचिभिरधिष्ठिताः सृष्टिक्रमं पारयन्ति, यत इयमादिदेवी परा संविच्छक्तिश्चिदानन्दादिसमुच्छूनतां घनतां भजन्ती योनिरूपताम् आपाद्य महाभूतविवर्तोद्भावनेन विश्वप्रसरमारचयन्ती लोकयात्रां पारयति, ते सृष्टिप्रसराः पञ्च पञ्चविंशतिरूपाः पञ्चधा गताः वर्णधामसंविद्रूपाः पूजासमये वर्णषट्कनियमं नातिक्रामन्ति । एवं वर्णषट्केन उपलक्षितसृष्टिप्रसरे अवतारभूमिकावेशेन क्रमार्थः पञ्चधोद्भावितः, कुण्डलिन्यामावर्तपञ्चकरूपप्रणवाकारोल्लास एव पञ्चात्मकविश्वव्याप्त्या स्थितः कन्दनाभिहृद्वक्त्रभ्रूमध्य-

पञ्चकविकासेन च प्रथमस्पन्दरूपो धामक्रमः सर्वेषां व्यञ्जनानामविशेषेण योनित्वेऽपि मुख्यतया कवर्गादिपवर्गान्तयोनिपञ्चकस्य पश्यन्ती-मध्यमयोः तथा घोषण्या घोषस्वभावता नाम वैखरीपूर्वकोटौ या व्यज्यते, यदाहुः

> 'आकाशवायुप्रभवः शरीरा-
> त्समुच्चरन्वक्त्रमुपैति नादः ।
> स्थानान्तरेषु प्रविभज्यमानो
> वर्णत्वमागच्छति यः स शब्दः ॥'

इति घोषत्वेन उपपद्यते, तया घोषण्या सह तस्या एकस्या द्वित्वेन आसां च वाचां चतुष्टयीत्वम् इति वाक्चतुष्टयस्य परावागधिष्ठानेन यः पञ्चधोदयः स एव वर्णक्रमः श्रोत्रादिपञ्चकप्रसरेण संवित्प्रसरः, तथा ब्रह्मादिकारणपञ्चक-प्रसरेण संवित्क्रमः, शब्दादिपञ्चकक्रमेण अर्थ-क्रमः, इति – निखिलोऽयं संविद्धामक्रमः । आसां च सर्वासां परतरचिद्व्याप्तिरभेदेन प्रथि-

ता – इत्युपकरणीभूतयोनिपञ्चकमेतद्रूपं बोद्ध-व्यम्, इति – सृष्टिक्रमः ॥ ४ ॥

अथ स्थितिक्रममाह

तुर्य सुषुप्त स्वानु जागर्यु
ज्ञानसिद्धवज्जेत नीरूपु ।
चौरय विच्यु जञी सागर्यु
व्यापोह शवन्युकमरूपु ॥ ५ ॥

तुर्यादिचतुष्टयव्याप्त्या चत्वारो ज्ञानसिद्धाश्चतुर्वर्णमन्त्रैः पूज्यन्ते, तुर्यादिभूमिकाचतुष्टयेन ज्ञानसिद्धानां चतुर्णां धामक्रमः, यथा स्वरचतुयाधिष्ठानेन वर्णक्रमः, मयूराण्डरसवत् विश्वगर्भीभावेन योऽङ्कुरितः परमाकाशः स प्रथमो ज्ञानसिद्धः, प्रथमस्पन्दोदयो यः स द्वितीयो ज्ञानसिद्धः, इन्द्रियमध्यपतिता चित् निर्विकारा सा तृतीयो ज्ञानसिद्धः, बाह्यप्रसृतदृ-

पं० १४ क० पु० निर्विचारा इति पाठः ।

त्तीनां प्रत्यावृत्त्या स्वात्मनि सामरस्यकारी अन्तर्मुखो विमर्शः स चतुर्थो ज्ञानसिद्धः, इति–सिद्धानां संवित्क्रमः । एते हि स्पर्शरूपरससौरभाधिष्ठातारः यथायथं घनीभूय वायुज्वलनसलिलक्षितिविवर्ततया प्रसक्ता अपि, वर्जयित्वा नीरूपं भूताकाशं, तथा तुर्यातीतं धाम, अप्रसन्ना अपि पूर्णस्वातन्त्र्यविभवा लोकयात्रां प्रवर्तयन्ति पारयन्ति च, यस्तु पीठपारम्पर्येण पत्रिकाभेदो दूतिराजतनयपर्यन्तो युगनाथानां दृश्यते स कथमपि सामञ्जस्यं नोपयाति, तथाहि बहिर्निरूप्यमाणस्य भावस्य यस्य कस्यचिदेकया कयापि नामरूपत्वात्संज्ञया भवितव्यम्, इति श्रीखगेन्द्र-कूर्म-शेष-मच्छन्दाख्यया चत्वारः सिद्धा व्यपदिश्यन्ते । अन्यत्र दर्शनान्तरे कुलाकुलक्रमेण एतत्खगेन्द्रादिनाम्नैव व्यवह्रियमाणाश्चत्वारः खगेन्द्राद्याः, तत्कुलाकुलप्रक्रियया तदनुषक्तदूतिराजतनयानुषङ्गं प्राप्ता इह पूज्यतया आरोप्यन्ते, इति–पापात्पापेयं वा-

चोयुक्तिः कथं नाममात्रसाधारण्यमभेदस्य कारणम्, यथा – दाशरथी रामो मुनिवरवामदेवतनयो रामदेवो भार्गवो वा राम ऐक्येन व्यवह्रियन्ते, इति नामैक्येन विप्रलभ्यमाना अन्यत्र तथा नामसादृश्येन विप्लवमानाः पूर्वाचार्या नानुगन्तव्याः, यतः – परा संविद्देवी चतुर्धा सृष्टिस्थितिसंहारानाख्यैर्भूमिकाविशेषैर्विश्वप्रपञ्चस्य प्रवर्तने निवर्तने च कारणम्, सा तन्मयीभावाय बहिः क्रमचतुष्टेन तथैव पूज्यते, तत्र कोऽवकाशः कनिष्ठस्य गुरुक्रमस्य पूज्यतायाम्, इति चतुर्भिरेव ज्ञानसिद्धैः स्थितिक्रमः पार्यते। ननु राजतनया द्वादश ज्ञानक्रियामरीचिक्रमव्याप्त्या स्थितिक्रमस्याङ्गं भवितुं युक्ताः? सत्यं – किं तु संहारक्रमे मरीचीनां निर्देशो भविष्यति, इति किं पौनरुक्त्येन। अथ स्थितिपूर्वकः संहारो भवितुं युक्त इति स्थितिक्रमे मरीचिक्रमस्य निर्देशो ज्यायान्? इति चेत्, नैतत् – मरीचिक्रममयी हि जाग्र-

न्भूमिकास्ति वाहप्रथापरिहारेण जाग्रद्भूमिकायाः स्वरूपं न किंचित्संभवति, इति स्थितिक्रमे मरीचिप्रसरः स्वतः संभवति, इति पृथक् निर्देष्टुं न योग्यः, इति – चतुर्धाभाव एव श्रेयान् ॥ ५ ॥

अथ संहारक्रममाह

ञानशत्त शोभेद्युपसऊ
षड्विधअञ्ञ क्रियामयशत्त ।
रुद्रवन्न मतिनाशे खसऊ
सव्वाचारे संहितिमत्त ॥ ६ ॥

सैव शक्तिः ज्ञानशक्तिभेदेन षोढा प्रसृता क्रियाशक्तिभेदेन षड्विधैव व्यावहारिकी दृश्यते, तन्मध्यान्निर्विचारां दशामध्यासीना मतिनाशेन खण्डितैकादशसंख्यामलंकृतवती एकादशवर्णमन्त्ररूपतामापद्यते 'एष एव धामक्रमः' यकारादिहकारान्तमष्टसंख्यामाप्ता तदनु क्षकारस्य संहारवर्णस्य आदिमध्यान्तभूमिकाभिः ककार-

षकार-अःकारैर्विभक्ताभिस्तिसृभिः सह एकादश भवन्ति, अवसानस्थिता मातृका संहारक्रमस्य वर्णक्रमः, वाहदेवीनां स्वस्वरूपनिष्ठता संवित्क्रमः ॥ ६ ॥

अथ अनाख्याक्रमं प्रस्तावयितुमाह

पत्तेकसह् अन्तरदश राजि
मूल्हदे सम्यचुखण्ड ।
अक्कै आदिदेव जगभाजि
तोदश सत्तदशाक्षरचण्ड ॥ ७ ॥

प्रत्येकं सृष्टिक्रमादीनां क्रमान्तरैरन्तर्दशा संभाव्यते, इति सृष्टिक्रमस्य सृष्टिस्थितिसंहारानाख्यगर्भीभावः, एवं स्थितिसंहारयोः । ननु कथं 'सृष्ट्यनाख्यं स्थित्यनाख्यं संहारानाख्यं' च इत्यनाख्यं भिद्यते, एवं युक्तमुक्तमेतत् – यदि परमेकं स्वतो निरुपाधि सत् उपाधिभिर्विशेष्यमाणं भेदं गाहते, इति – सृष्ट्यनाख्यादिभेदोऽस्य प्रवृत्तः, स च सृष्ट्याद्यनुषङ्गेणास्पर्शोऽप्येवं

व्यवह्रियते? इत्युक्तम् – मूलेति, मूलह्रदे अनाख्यरूपेण तदुल्लास्यमानसृष्ट्यादिक्रमेण सह चतुष्खण्डावभासते, सेयं स्वेन अनाख्यरूपेण क्रमार्थारूषितेन उद्भ्राजमाना आदिदेवी जगति कुलपिण्डाख्ये त्रयोदशी सप्तदशार्णा चण्डमरीचिरुद्योतते, तदिदं सृष्टिचक्रं सृष्टिरूपं सृष्टिमात्रविश्रान्तं, स्थितिचक्रं स्थितिरूपं स्थितिमात्रविश्रान्तं, संहारचक्रं संहाररूपं संहारमात्रविश्रान्तम् – क्रमत्रयस्य स्वरूपमात्रविश्रान्तिरेव अस्ति, न तु तुर्यक्रमगर्भीभावः । अनाख्यचक्रे तु सृष्टिः क्रमगर्भापि सृष्ट्यनाख्यविश्रान्तैव, स्थितिश्च क्रमगर्भापि स्थित्यनाख्यपरा, संहारश्च क्रमगर्भोऽपि संहारानाख्यपरायणः । ताश्च तिस्रः सोपाधिका अनाख्यभूमयः निरुपाधिके मूलभूते अनाख्ये धाम्नि सामरस्यं भजन्ते, एष सृष्ट्यादिक्रमो मूलभूतानाख्यस्वरूपविश्रान्तये पुनराविष्कृतः, इति – तत्परोऽयं प्रपञ्चजातः । अप्रपञ्चक्रमः परः चिन्तनीयः, अप्रपञ्चेऽप्यना-

ख्यक्रमे प्रपञ्च इति – अनाख्यप्रभवोऽनाख्यम-योऽनाख्यप्रतिष्ठितोऽनाख्यविश्रान्तश्च, इति वि-भागपूर्वकमविभागविश्रान्त एक एवाखण्डचि-दाभासरूपोऽनाख्यक्रममयो भेदविगलनेन सा-मरस्यमयो महार्थः । अत्रादिदेव्याः स्वरूपप्र-तिष्ठानमेव धामक्रमः, रावोदय एव वर्णक्रमः, रावोपशान्तिश्च संवित्क्रमः, इति – महासंहार-क्रमः ॥ ७ ॥

अथैषामेव क्रमाणामुत्तरोत्तरं निरावरणधाम-विश्रान्तिमाह

वाहवाहपञ्चि आकलिते
देव्युषष्टिकलो अनुभावु ।
सिष्टयाद्युचौमूलावलिते
पञ्चहष्टु निह्लक्षि चावु ॥ ८ ॥

द्वादशापि वाहाः पञ्चभिर्वामेशीभिः क्रमेण षष्टिसंख्यामापाद्य चतसृभिः सृष्ट्यादिभिर्वलि-ताश्चतुष्षष्टिसंख्यां भजन्ते, इति चतुष्षष्टितमां

भूमिकामुल्लङ्घ्य तदवसानरूपः पञ्चषष्टितमो महार्थो भूमिकाविशेषं सर्वविश्रान्तिस्थानसामरस्याय वाञ्छति, इत्येष महाक्रमः ॥ ८ ॥

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
दशम उदयः ॥ १० ॥

अथ एकादश उदयः ।

अमुमेव महाक्रमं संवित्क्रमेण उक्त्वा पृथक्पृथगुपास्यत्वेन धामक्रमेणाह

नाख्य शत्त शमिची चिद्धामि
पञ्चभास शिवाति आय ।
सहजु सभावु एहु निद्धामि
पलयोदय आकस्मिक भाय ॥ १ ॥

सेयमनाख्या शक्तिश्चतुर्धा स्वविस्फारं प्रत्याहृत्य स्वयमेव चिद्धाम्नि विश्रान्ता सती संवित्क्रममाविष्टापि संवित्क्रमधामक्रमयोरवियोगित्वात् धामक्रमेण पुनरपि भासाक्रमेण उदि-

याय, अयं हि वस्तुधर्मो निरुपाधेर्निर्धाम्नः पर-ब्रह्मसत्तायाः – यत्प्रलय उदयानुगत उदयश्च प्रलयानुगत इत्याकस्मिकौ प्रलयोदयावेकवारं भवत एव ॥ १ ॥

एतदेव अनुभावयितुमाह

अकलिपरमनभा उयवान्नि
विश्वपपञ्चु कमाथु कमोन ।
पर्यन्ति निजपद शमवान्नि
कमुअकमुरेउ भासावोन ॥ २ ॥

परमनभस्त उदितया आद्यक्षरकलया विश्व-प्रपञ्चमयः क्रमार्थः कलनां प्रापितः साक्षात्कृतश्च, पुनः पर्यन्ते निजे पदे शाम्यन्त्या एनं क्रममक्रमीकृत्य पुनरपि भासाक्रमेण तद्वत् भासितम्, इति संगृहीतोऽर्थः ॥ २ ॥

तं भासाक्रमं वर्णसंख्यया नियमयति

रविगतभासावाहसमासेत
चौत्रियंअक्केनचौरोचक्क ।

धामतिन्नयुजालाकुलभासेत
अष्टादहचुद्दहनवअक्क ॥ ३ ॥

चत्वारो हि अस्मिन्भासाक्रमे सकलासकल-निष्कलानिष्कलपराख्याः क्रममहाक्रममवभा-सयन्ति, तत्र सकलक्रमे द्वादशधा चक्रिणीनां संख्यानियमः, प्रतिचक्रिणीमन्त्रे च अष्टादश-संख्यावच्छिन्नो वर्णनियमः, सकलनिष्कलक्रमे च षोढा चक्रिणीनियमः यत्र चतस्रः सकल-क्रमवदष्टादशार्णाः द्वे च चतुर्दशार्णे निष्कल-वत्, निष्कलक्रमे च तिस्रश्चक्रिण्यश्चतुर्दशार्णाः, परे च क्रमे एकैव कुलविद्या नवार्णा – इति चक्रिणीनां तन्मंत्राणां च संख्यानियमः, ततश्च धामत्रयीं स्वरूपोद्दीपनेन प्रथां गच्छति इत्युक्तं 'धामेति' यतः सौर्यः स्वरूपेण द्वादशैव ऐन्द-वीनां षोडशानां मध्यात् दश जाज्वलदाग्नेय-नाडीदशकेन आत्मनि सामरस्यं नीताः, इति षट् सकलनिष्कला एव अवशिष्यन्ते, आग्ने-

य्यश्च तिस्रस्तापनीकरालालेलिहावसानभूताश्च-ण्डतरा निष्कलगताः, इति धामत्रय्या त्रयः क्रमा व्याप्ताः, परश्च क्रमो निर्धामधामा शान्तो निर्वाणनेदीयान् न धामभिः स्पृश्यते, इति धामत्रयं ज्वालाकुलं प्रत्येकमावेशेन भासयित्वा साक्षात्कृत्य अष्टादशभिः चतुर्दशभिर्वर्णैर्नवा-र्णैव प्रथते ॥ ३ ॥

अथास्यैव निर्धामतामाह

अग्नीषोमवलित बिन्दुकला
शव्वीह षोडश शशिसम भावु ।
द्वादश सूर्यकला दश अनला
सोपञ्चहष्टु निद्धामि चावु ॥ ४ ॥

बिन्दोरधः कालाग्निप्रतिबिम्बेन ऊर्ध्वं कुण्ड-लिन्याश्च चान्द्रमससंदोहेन नित्यमग्नीषोमम-यता, तस्य दश-षोडशकलासंप्लवेन षड्विंशति-

पं० ३ ख० पु० पार्श्वक्रम इति पाठः ।
पं० १३ क० पु० कन्दाग्निप्रतीति पाठः ।

कलावत्त्वम्, सौरधाम्नश्च द्वादश कलाः, षोडश चान्द्रमस्यः, दश आग्नेय्यः इति – चतुष्षष्टिकलं धाम पञ्चषष्टितमे निर्धाम्नि निमज्जति, इति भासाक्रमस्य धाममयस्य निर्धामपदे प्रवेशः ॥४॥

एतदेव निगमयति

विमलमकुर सामाञी
यत्याभयन कमाकम सेय ।
प्रशमुभजितथपद अमलाञी
शून्यं कृत्वा पुनरपि तेय ॥ ५ ॥

सैवं रूपा चित् तस्मिन्पदे अम्लानैव प्रशमं भजते, कुतः? इत्याह – यत्या इत्यादि, [ यत्र ] विभिन्नस्वभावौ क्रमाक्रमावुदेतः तस्मिन्सर्वाद्वयमये धाम्नि शाम्यतीति, सा च कीदृशी? इत्याह – विमलेति, विमलमकुरे निर्मलदर्पणे प्रतिबिम्बागततत्समदर्पणसमानेति, तदेतत्संकलितविकलितगणितप्रक्रियाङ्कं दृष्टान्तमाह –

शून्यमित्यादि, गणिते हि शून्यादेवोपक्रमः पुनश्च तत्रैव प्रत्यापत्तिः, इति भासाचक्रम् ॥५॥

अथ समयेश्वरीप्रक्रियामाह

समयेश्वर अक्कैकमपञ्चक
वन्नविभागे विधिलोपान ।
पूरक अभिमतवस्तुविधायक
पूनाहुतयाखेत होमान ॥ ६ ॥

इष्टस्य मान्त्रस्य प्रसरस्य यदुक्तं फलं तस्य निष्प्रत्यूहताविष्कृतये समयविद्यावतारावसरः, अन्यक्रमेषु तु समप्राधान्यभावात् प्रतिचक्रं समयविद्योपदेशो दृश्यते, अस्मिंश्चातिनयसार-सर्वस्वे क्रमार्थे यच्चरमस्थानं तत्रैव सर्वेषां क्र-माणां विश्रान्तत्वात् तस्यैव प्राधान्यात् एकैव समयविद्या, सा च भिन्नभिन्नक्रमोक्तफलानां प्रपूरणी, इति क्रमगर्भैव तत्तत्क्रमार्थभेदेन अ-हङ्कारान्तेन वर्णेयत्ताविभागेन कल्पोक्तफलविशे-षस्य लोपनिवारणेन अर्थसाधनी इति पूर्णाहु-

तिरिव, यथा पूर्णाहुत्या सर्वान्कामानवाप्नोति, इति मीमांसाग्रन्थः – पूर्वोपक्रान्तहोमार्थस्य अपूर्वफलनिष्पत्तये यथा पूर्णाहुतिः फलप्रदा, तथेयम् ॥ ६ ॥

तदेव आह

सिष्टिसमय·····हअस्त्रे छन्दि
दुएवन्यु कमलजु भक्षेय ।
पञ्चदहेयथितिमय सुरन्दि
नाभीपम्मनाभु········ ॥ ७ ॥

---

गासुकरि बिन्दिवा तेउ
सतिकखहसुभगङ्कर शिवशिव ।
सव्वसिद्धि······················
नेत बाह्यभासासमय सदाशिव ॥ ८ ॥

---

गासुकरि बिन्दिरिज्जी भावेउ
........................ ।
........................
........................ ॥ ९ ॥

(तिलकम्)

सैषा अनाख्यसमयेश्वरी समया भगवती महास्त्रेण प्रथमेन वर्णद्वयेन कन्दात्कमलोद्भवं भक्षयति – उपासकानां स्वस्वरूपावाप्तिप्रतिरोधकभावमस्य कमलजस्य अपसारयति, तथा अन्यैः पञ्चदशभिर्वर्णैः स्थित्यनाख्यसमया नाभिस्थानात् पद्मनाभं विष्णुं तनूकरोति – स्वरन्ध्रे मध्यमे नाडिक्रमे अस्यापि प्रतिरोधकाभावं विधत्ते इत्यर्थः, एकोनसप्त[ति]भिर्वर्णैः संहारानाख्यसमयेश्वरीमध्यात् हृत्परिसराद्रुद्रं निहन्ति – तद्वदेव निष्प्रतिरोधं विधत्त इति यावत् । सैव शुद्धानाख्यसमयेश्वरी वर्णद्वयेन वक्त्रादीश्वरं श्लथयति । भासासमयेश्वरी च भवन्ती द्वाद-

शभिः पश्चिमैर्वर्णैः बिन्दोः सदाशिवमपसारयति, एवमेषा शतार्णा विभक्ताप्यविभक्ताः सर्वसिद्धिऋद्धीर्भावयित्वा सौभाग्यकरी भवति, इति शिवम्, शिवमित्याश्चर्यम्। इति समयविद्यायाः कारणपश्चकन्यासः ॥ ७ ॥ ८ ॥ ९ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
एकादश उदयः ॥ ११ ॥

---

अथ द्वादश उदयः ।

तदेतत्सदातनं सर्वजनीनं सुप्रकटं प्रत्यभिज्ञायताम्, इत्याह

एव विभागे चिदपरिशीजि
चेतन परशुयमान मनेत ।
विषयछायचिम्मय जाञीजि
देवीवप आवशु भजेत ॥ १ ॥

अनेनोक्तचक्रचक्रेश्वरीविभागेन सृष्टयादिक्र-

मगर्भेण सर्वाकारं वस्तुतश्चित्स्पर्श एव प्रतिपादितः, तत्र चेतनस्पर्शमात्रमेव सारं मन्तव्यम्।

ननु तत्तच्चिद्भूमिकानां समविषयावेशो दृश्यते? तदर्थमाह – विषयेति, छायामात्रेण संविदाविष्टो विषयोऽस्ति सोऽपि चित्परमार्थ एव भावनीयः, कथम्? इत्याह – देवीति – देवीवपुषि आवेशं विधायेत्यर्थः, यतः समस्ता इमा लोकयात्रा भिन्नाभिन्नाः – संहतविभक्ताः पदार्थानां बहिरुच्छुरकन्धरतया स्वसामर्थ्येन स्वरूपस्य अभावात् न संभवन्ति भावे वा अन्योन्यं भावस्वभावविरोधश्चित्परमार्थत्वात् चित्संबन्धेन चिदावेशेन चित्परमार्थतया चिद्विश्रान्त्या ताः प्रतिष्ठां प्रतिलभन्ते – नान्यद्भावस्वरूपं किंचित्स्वोपज्ञं समस्ति, इति चेतसि विश्रामयितव्यम्॥१॥

तत्र प्रक्रामणीं युक्तिमाह

ऋदयाउसमेलो सम्मज्जि
योयो क्षवनोहिइ पदाथु।

भुत्तेसतिलाडन सापज्जि
अजगर वित्तबडो परमाथु ॥ २ ॥

वस्तूनां प्रातिस्विकस्वस्वरूपसतत्त्वसारं हृद-यमुच्यते, तच्च अनश्वरं चिन्मात्रमेव पर्यवस्यति, यो यः पदार्थ आत्मनो योगाय अभ्यर्थ्यते तस्य तस्योक्तवद्धृदयमेलनायां स्वात्मना सह साम-रस्यं स्मरणीयम् – वेद्यस्य यः परमार्थः स वेद-कपरमार्थसतत्त्व एव लक्षणीय इत्यर्थः, तस्य तु आत्मसात्क्रियमाणस्य भावस्य भावाभावसा-मरस्येन तद्वद्दृभ्रुतया पुनः पुनरभिनिवेशो न युक्तः, यतः अजगरव्रतं नाम परिपूर्णः प्रमातृ-धर्मः, स एव च सुधियां परमार्थत्वेन सर्वप्र-यत्नेन अवलम्बनीयः ॥ २ ॥

ननु भवभीतैस्तद्भयनिवृत्तये गुरुमुखदृशा पूजाक्रमेण अभिनयोपायः कश्चित्पारम्पर्यप्रवृ-त्तोऽभ्यर्थनीयः, तत्र कः प्रसङ्गः संविच्चर्चानाम्, भवता हि

'तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ।
तिलभुक्तिलदाता च षट्तिली नावसीदति ॥'

इति वत् सर्वव्ययीकरणेन समस्तेतिकर्तव्यतासु चिन्मात्रमेव उपकरणीकृतं, तत्कथं विश्राम्यति ? इत्याशङ्क्याह

भागविभाग्यु चक्कपवेशे
अक्कथे चिन्मय कालिशरीर ।
पूजथिय्य ऋदपदआवेशे
नित्यसमाधाने हारीर ॥ ३ ॥

यथा गुरुमुखं 'चक्रचक्रेश्वरीणां चर्या अखण्डिता यतमा यतमा पूजनाय स्थिता तां तथैव पारयन्नेकस्मिन्नतिविितते कालिशरीरे पर्यवसाययेत्' इत्युक्तम्, भागेति भागविभागैस्तत्तच्चक्रप्रवेशेन सा सा पूजा उक्तवद्धृतपदावेशेन नित्यसमाधानेन निरुपाधौ चिन्मये वपुष्यन्तरङ्गतया भावनीया, इति नावधीरितं किंचित् ॥ ३ ॥

इदमेव च परम्परायातं निष्ठासतत्त्वं सर्वपीठेषु पीठचरीणाम्, इत्याह

भावस भोगु चिदिविषयीकरनु
खेचरीन एह्नु वल्लभठावु।
चहेत करन भैरव आलीवनु
आलिङ्गनुपत्तस निभावु ॥ ४ ॥

भावस्य भोगः कः? इति संदेहे – चिद्विषयीकरणमात्रमेवोपभोगार्थः परम्परायातः, तदेव खेचरीणां वाहदेवीनां वल्लभं स्थानं, ताश्च वाहदेव्यः किंचित्किंचिद्वैषयिकमास्वाद्य चिद्भैरवसमर्पणं कुर्वन्ति, यावदन्ततः स्वात्मसमर्पणेन तं परित्यज्य विश्रामयन्ति, इति विषयभोगो निष्ठास्थानम् ॥ ४ ॥

एतदेव आशास्यतमं मन्यमान आह

निदुमुदितो गुरुवयन विसामेत
कमुसेवेत अक्क मुरंजेत।

भावुभावुक्रदयि विश्शामेत
क्षवुसव्व लाडनवज्जेत ॥ ५ ॥

एवं नित्यप्रमुदितो गुरुवरसंप्रदायं हृदि विश्राम्य, क्रमस्पर्शपुरस्सरामक्रमे विश्रान्तिं मन्यमानो भावं भावमात्मसात्कृत्य बाह्यभावाभिष्वङ्गं परिहृत्य सर्वं प्रक्रामयस्व ॥ ५ ॥

एतदेव आशंसनीयं मन्यमान आह

नित्यसमाधाने डलवाने
चर्याचर्यक्रमे उक्किष्ट ।
लौकिलोकोत्तर वसवाने
एह्नु कमथु भजीव नयनिष्ठ ॥ ६ ॥

प्राचुर्यप्रवृत्तेन सततावधानेन चर्याचर्याक्रमेण उत्कृष्टसिद्धिभाजः लौकिके लोकोत्तरे च मार्गे वर्तमानाः इत्थमेव सर्वाकारं क्रमार्थं भजन्तु नयनिष्ठाः ॥ ६ ॥

विस्मृतं चैतत्सर्वेषाम्, इत्याह

चुद्दह भूतसग्गतोयत्ति
भुवनिसदितु महाथु थ्योह ।
सन्दसव्युगतसव्वे सउत्ति
महाजन येन गुरुमुखपथ्योह ॥७॥

चतुर्दशसु लोकेषु चतुर्दशविधस्यापि भूतसर्गस्य सदातनोऽयं महार्थनामा स्वरूपापरपर्यायः चित्प्रकाशोऽपरिहार्यः सुप्रकटस्थितः, स च सर्वेषां भावावेशेन स्मृतिपथादपस्तृतो – नष्टः स्थितः, ते तु महाजनाः – येषामित्थं गुरुमुखमाविर्भूतम्, इति सप्तभिर्महार्थस्वरूपं परिशीलितं यः स्पर्शमरीचीः सर्वरोमाश्रया उद्बोधयति, सोऽयं मध्यमे धाम्नि एकरसीभूतो नवचक्रीविषयः संप्रदायोऽन्योन्यानुप्राणनेन प्रकाश्यते, तथा पीठचक्रे तन्मात्रव्याप्तिः भूतव्याप्तिः पञ्चवाहव्याप्तिश्च – इति त्रिधैव, पञ्चवाहे महाक्रमसृष्ट्यादिविश्रान्त्या सह करङ्किण्यादिमुद्राव्याप्तिः,

वृन्दक्रमात् पञ्चप्रकारदेवताव्याप्तिश्च – इति त्रिधैव व्याप्तिस्थितिः, प्रकाशानन्दमूर्तीनां रविशशिहुतवहरूपाणां मनोबुद्ध्यहंकारैः सत्त्वरजस्तमोभिः सृष्ट्यादित्रयेण – इति त्रिधैव व्याप्तिस्थितिः, वृन्दचक्रे देवतास्तावत्पीठाष्टकाश्चतुष्षष्टिः, तासां चतुष्षष्टिः सिद्धयः संविद्भूमिकारूपाः यतः पञ्चवाहव्याप्त्या प्रत्येकं द्वादशमरीचीनां षष्टिभावश्चतस्रश्च मूलदेव्यः, इति – चतुष्षष्टिश्चिद्भूमिकास्तासाम्, इति संविद्भूमिकाव्याप्तिः, तथा कला अष्टात्रिंशत् बैन्दव्यश्च षड्विंशतिः, इति – चतुष्षष्टिभिर्धामकलाव्याप्तिः, ह्रस्वदीर्घप्लुतैः पञ्चदशभिः सन्ध्यक्षरैरष्टभिर्यमैश्चतुर्भिरेवमेकत्रीभूय व्यञ्जनैः सह चतुष्षष्टिभिर्वर्णक्रमः, इति – मकारदेव्या उक्तपञ्चवाहादिचक्रपञ्चकेन महाक्रमचतुष्टयेन, इति नवधा, तथा भासाक्रमचतुष्टयेन समयेश्वर्या विभागपञ्चकेन च, इति नवभिरेव च, इति – मयूराण्डरसवत् सर्वैरन्तर्गर्भितायाः समयस्थितिः,

महाक्रमभासाक्रमसमयेश्वरीविभागानां चा-न्योन्यं सर्वप्रकारमविभागः – इत्येकरसीभूतः सर्वोऽयं परापरश्चिद्रसः परतरे चिद्धाम्नि सामर-स्यमुपयाति, इति – निगमितोऽर्थः ॥ ७ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
द्वादश उदयः ॥ १२ ॥

---

अथ त्रयोदश उदयः ।

---

अथोच्चित्य कांचिदितिकर्तव्यतामाह

गुरुमुख चि यिद् फलतिवातो
कथ पूजन सङ्कम अविवाद् ।
एक कालु एक पदिपातो
चोदस्यु पूजनुमर्याद ॥ १ ॥

---

सिष्टि परौघे थित दिव्यौघे
संहित सह ओघे सिद्धौघ ।

मानवौघ नारिव्यपति भोगे
पीठभास समयु पञ्चौघ ॥ २ ॥

गुरुमुखं यदि तव फलप्राप्तिपर्यन्ततो निर्वि-
वादतया एककालमासादितसंक्रमणपूजनक-
थनैः संमुखीभूतम्, ततो गुरुवदनैकप्रतिष्ठानि
त्रीण्यपि संभवन्ति। तत्रैवं सति तस्मिन्प्रसन्ने
त्रीण्यपि एकवारं फलन्ति उत क्रमेण? इति
संदेहे निश्चयोऽयम् – गुरुतः संक्रमणोत्तरकालं
कथनप्राक्कोटौ चतुर्भिर्दिवसैः पूजनोपदेशः पा-
रणीयः, इति मर्यादा नोल्लङ्घनीया, तत्र चास्मा-
कमित्थं गुरुमुखं – पीठचक्रपूजापूर्वकं परौघो
गुरुक्रमः सृष्टिचकं भासाक्रमः समयेश्वरी पूज-
नीयेत्येको दिवसक्रमः, द्वितीयेन तद्वत्पीठचक्रपू-
जापूर्वकं दिव्यौघो गुरुक्रमः, स्थितिक्रमश्च भा-
सासमयेश्वरीभ्यां सह उक्तवत् पञ्चप्रकार एव
यागः, तृतीये दिवसे पीठचक्रे महौघो गुरु-
क्रमः संहारक्रमो भासासमयेश्वरीद्वयं चेति पञ्च

पूजनीयाः, चतुर्थे च पीठचक्रं सिद्धौघमानवौघशिष्यौघाः अनाख्यक्रमो भासाक्रमः समयेश्वरी चेति पञ्चैव पूजनीयाः, इति शेषः ॥१॥ २॥

अथार्घपात्रविधिमाह

चुपावो गुरुसमयन्यासे
कमपञ्चक त्रेपावो अग्गु ।
अजमुखबिन्दु जञीपर्यासे
अकुमुण्डिति यु अश्चनसग्गु॥ ३॥

चतुष्पादासने पात्रे गुरुक्रमौघान्समयेश्वरीं च पूजयेत्, तथा त्रिपादासने पात्रे सुधूपिते कृतपात्रसंस्कारे रत्नद्वयालब्धन्यस्तपरासवपूजितार्घभरिते प्रतिबिम्बितमुखे क्रमचतुष्टयावसानं पूजयेत्, तयोश्च पूर्वपात्रमधोमुखम् पीतशेषं मुण्डव्योम्नि पातयेत्, उत्तरं च तद्वत्सार्घमधोमुखमर्चास्थाने योजयेदिति ॥ ३ ॥

दीपक्रमं युगलकेनाह

ये पर दिव्य महासिद्धौघे
　मानवौघ गुरुकम पञ्चौघ ।
ते कमपञ्चक अनुगत उपयोगे
　पीठचक्क समयासह भोग ॥ ४ ॥
चौर चौर कम चुचक्केशर
　दिनपञ्चक अकदूत पकाशु ।
अथ वा दीपशर्थन परोवर
　त्रोवह एकदिवस अवकाशु ॥५॥
(युगलकम्)

पञ्चभिर्दिवसैः प्रकाशचरुणा क्रमार्थयागः पारणीयः एकया दूत्या सह समयस्थेन, इत्यस्माकं गुरुमुखं, कथम् ? इत्याह 'ये परेति' ये मानवौघशिष्यौघयोरैक्येन गुरुक्रमाः पञ्च तान्क्रमेणैकैकक्रमानुग[मनेन] ………… पञ्च क्रमाः पूजनीयाः पञ्चसु दिवसेषु, आद्यन्तयोः

सर्वत्र पीठचक्रसमयेश्वरीभ्यां सह चत्वारि चत्वारि प्रत्यहं पूजास्थानानि भवन्ति – इति युग्मस्य समयोऽयम्, इत्थं च चतुश्चक्रेश्वरी पूजिता भवति। अथ वा एकस्मिन्नेव दिवसे आसादितसामयिक........ सामग्र्यां त्रयोदशात्मकेन समुदयेन पूजातिलकोक्तवत् पारणीयः, इति पूर्णोऽयं विधिः ॥ ४ ॥ ५ ॥

भासून्युपून्यु अनुभावो
एक घनोनय निष्ठित धाउ।
सरहस महाथु एषु उब्भावो
चे.... [सुजना] उ जनाउ ॥६॥

हे सुजना जनाः भवतामतिनयाविष्टानां महाम्नायाख्यं रहस्यस्थानमाधिभौतिकेनाधिदैविकेनाध्यात्मिकेन सार्वात्मिकेन च बलेन – इति चतुर्भिर्बलैरुपोद्बलितं चेतसि भासताम्, तच्च कीदृशम्? इत्याह – एकघनतामाप्तं संप्रदायपरिपूर्णैः पूर्वसिद्धैरनुभूतमनुभावितं च, उक्तवत्

बलचतुष्टयानुगुण्येनेति, अथ च चतुर्धा बलिकर्मणा निर्विघ्नतामापादितं निःश्रेयसफलं पारितम् ॥ ६ ॥

---

इति श्रीशितिकण्ठाचार्यविरचिते महानयप्रकाशे
त्रयोदश उदयः ॥ १३ ॥

---

अथ चतुर्दश उदयः ।

पावेत इह्नु कमु पभुस पसादे
शितिकण्ठस गत जम्मु किताथु ।
तेन मि महजन खलितमसादे
तेमारावेमहनयपरमाथु ॥ १ ॥

अमुमेतादृशं क्रमं प्रभुप्रसादेन प्राप्य शितिकण्ठस्य जन्म कृतार्थतां [गतं] जातम्, तेन तथाविधेन कृतकृत्येन मया महाजना अपि ········महार्थपरमार्थमनुस्मारिताः । इति शुभम् ॥ १ ॥

भेदैरष्टादशान्तैः परिणतिमगमद्यापि मध्ये नवानां
चक्रं पूर्वापराणां विमलरुचि वरं यद्ध्यनाख्यं क्रमाणाम् ।
भान्तोमुष्मान्महार्थप्रकटनपरमाद्वैततस्तेंशभेदा
गाहन्तां नश्च वश्चाप्युपचितविमलाखण्डितैकात्म्यवृत्तिम् ॥

---

ते अंशभेदाः, उपचितविमलाखण्डितैकात्म्यवृत्तिं नश्चास्माकं, वश्च युष्माकं, गाहन्ताम् — आविशन्ताम्, उपचिता वृद्धिं गता — विकासमाप्ता, विमला भेदकालुष्येण अस्पृष्टा, अखण्डिता सर्वव्यापिका, या ऐक्यात्म्यतया वृत्तिस्तां गाहन्तां — दिशन्तामाविशन्तामित्यर्थः, ते कीदृशाः ? अमुष्मान्महार्थप्रकटनपरमाद्वैततो भान्तः — महार्थतया प्रकटनं महार्थप्रकटनं तेन महार्थप्रकटनेन परमाद्वैतं महार्थप्रकटनपरमाद्वैतं, तस्माद्भान्तः शोभमानाः — महार्थतया सर्वे भासमानाः सन्त इत्यर्थः, यथोक्तं प्राक्

'या खेतक्षीरसमुद्र स एकत यन्याहश्चितन्यानृत्त ।'

इति, अस्मात्कस्मात् ? इत्याह — यदेतदनाख्यचक्रं अष्टादशान्तैर्भेदैः, परिणतिमगमत् अष्टा-

दशोऽन्ते येषां ते अष्टादशान्ताः तैरष्टादशान्तैः, ते च अंशभेदाः, अंशानां भेदाः अंशभेदाः — पीठचक्रम् परौघो दिव्यौघो महौघः सिद्धौघो मानवौघः — इति षट्, सृष्टिस्थितिसंहारचक्राणि त्रीणि च इति पूर्वं नवकम्, तथा समयेश्वरी........ शेषाः पञ्चतया सकलासकलनिष्कलानिष्कलपररूपं भासाक्रमचतुष्टय [ म् — इत्य ]........ष्टादशान्तैर्भेदैः परिणामं प्राप्तम्। अन्यच्च कीदृक् ? इत्याह — व्यापि व्यापकं, मध्ये, कस्य ? इत्याह — नवानां नवानां ........ पूर्वापराणामिति पूर्वे च ते नव अपरे च ते नव पूर्वापरे तेषां पूर्वापराणां नवानाम्, इति क्रमाणां सृष्ट्यादीनां वरमुत्कृष्टं सर्वाधिष्ठायकं, विमला पदार्थानां कालुष्यरहिता रुचिः — दीप्तिर्यस्य, तत्तथा, इति — आशीर्वादवाक्यम्॥ ॥

---

इति श्रीमहामाहेश्वराचार्यवर्य-श्रीशितिकण्ठाचार्यविरचिते
महानयप्रकाशे चतुर्दश उदयः ॥ १४ ॥

---

समाप्तश्चायं महानयप्रकाशः।

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥
श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥
तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥
( तिलकम् )

---

श्रीमत्स्वात्मशिवार्पणं बोभवीतु ।